॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला

७५

# शिशुपालवधरहस्यम्

( १–४ सर्गात्मकम् )

लेखक—

**डॉ० अशोकचन्द्रगौडशास्त्री**

व्याकरणाचार्यः, डिप् इन रशियन

अनुसन्धानोपाध्यायः ( रिसर्च एसोशिएट )

व्याकरणविभागः, वेदवेदाङ्गसङ्कायः

श्रीसम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी



चौखम्बा सुरभारती प्रकाशन

वाराणसी

# निवेदनम्

महाकविश्रीमाघप्रणीतं १-४ सर्गात्मकं शिशुपालवधमहाकाव्यमिदं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य शास्त्रिप्रथमवर्षस्य क-वर्गीयसाहित्यविषयस्य पाठ्यक्रमे निर्धारितमस्ति ।

शिशुपालवधमहाकाव्यस्यास्य सत्स्वप्यनेकासु टीकासु छात्राः परीक्षोत्तरणे काठिन्यमनुभवन्ति । तन्निराकरणाय सर्वथा छात्रसहितं विचार्यैव मया "शिशुपालवधरहस्यम्" (१–४ सर्गात्मकम्) पाठकानां समक्षमुपस्थाप्यते । आशास्यते यद् ग्रन्थस्यास्य स्वाध्यायेनानुशीलनेन च छात्राणां महानुपकारो भविष्यति ।

## ग्रन्थवैशिष्ट्यानि

क्रमशो विविधविषयबोधकरणाय ग्रन्थोऽयं मया त्रिषु भागेषु विभक्तः—समालोचनात्मकप्रश्नोत्तरभागः, श्लोकव्याख्यात्मको भागः, प्रश्नपत्रागतप्रश्नोत्तरभागश्चेति भेदात् । प्रथमभागे ग्रन्थकारेतिवृत्तम्, यद्विषये सुप्रसिद्धानां प्रणितीनां सम्यग् व्याख्यानम्, शिशुपालवधरचनायाः मूलाधारवर्णनम्, पात्रचरित्रचित्रणम्, सर्गकथासारेत्यादयोऽनेके समालोचनात्मकाः प्रश्ना उत्तरिताः । द्वितीयभागे प्रतिसर्गस्य प्रामुख्यम्भजमानानां श्लोकानां ( प्रश्नपत्रान्तर्गतानां श्लोकानाञ्च तदीशवीयनिर्देशसहितं ) सप्रसङ्गं ससन्दर्भं छन्दोऽलङ्कारसमासादियुतञ्च व्याख्यानमस्ति । तृतीयभागे सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य प्राचीनप्रश्नपत्राणि तदुत्तराणि च प्रदर्शितानि ।

## कृतज्ञताप्रकाशः

सर्वप्रथमं ग्रन्थस्यास्य निर्विघ्नपूर्तये परमपितरं परमेश्वरं, गुरूंश्च श्रद्धया प्रणम्य परमपूज्यान् पितृचरणान् व्याकरणाचार्य-विद्यावारिधिपदवीभृतः श्रीपण्डितविजयमित्रशास्त्रिणः, मातृचरणास्तत्रभवती श्रीमतीराजलक्ष्मीदेविचरणाश्च प्रति सादरं हार्दिकी कृतज्ञता प्रकाश्यते ।

अन्ते च ग्रन्थस्यास्य शीघ्रमनोहरप्रकाशनार्थं चौखम्बासुरभारतीप्रकाशनव्यवस्थापकेभ्यः, तत्सहयोगिभ्यो, मुद्रकेभ्यः च हार्दिकाः धन्यवादाः प्रदीयन्ते । एवमेव नानाविधसहयोगप्रदानार्थं मम धर्मपत्नी श्रीमती वीणा ( बीना ) देवी, भ्रातरो, भगिन्यः शुभेच्छवश्च सर्वथा धन्यवादार्हाः ।

विदुषां वशंवदः

**अशोकचन्द्रगौडशास्त्री**

# विषयानुक्रमणिका

## समालोचनात्मको भागः

## श्लोक-व्याख्यात्मको भागः

### प्रथमसर्गः

| क्रमाङ्काः | विषयाः | पृष्ठाङ्का |
|---|---|---|
| १३. | "अथ प्रयत्नोन्नमिता" इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं विवृणुत । | ४१ |
| १४. | "तमर्घ्यमर्घ्यादिकया" इति पद्यं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा विवृणुत । | ४२ |
| १५. | "न यावदेतावुद" इति पद्यं सप्रसङ्गं सन्दर्भछन्दःकोशसमासविग्रहालङ्कारोल्लेखपूर्वकं सुरगिरा व्याख्यायताम् । | ४३ |
| १६. | "महामहानील" इति पद्यस्य छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सप्रसङ्गं देववाण्या व्याख्या कार्या । | ४४ |
| १७. | "विधाय तस्यापचितिम्" इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं व्याख्येयम् । | ४५ |
| १८. | "अशेषतीर्थोपहृता" इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं व्याख्यायताम् । | ४६ |
| १९. | "स काञ्चने यत्र" पद्यमिदं सप्रसङ्गं सन्दर्भकोशच्छन्दःसमासविग्रहालङ्कारभावार्थनिर्देशपूर्वकं व्याख्यायताम् । | ४७ |
| २०. | "स तप्तकार्तस्वर" इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं व्याख्येयम् । | ४८ |
| २१. | "रथाङ्गपाणेः" इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं व्याख्यायताम् । | ४९ |
| २२. | "युगान्तकालप्रती"ति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारप्रदर्शनपूर्वकं व्याख्येयम् । | ५० |
| २३. | "सितं सितिम्ना सुतरा"मिति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारप्रदर्शनपूर्वकं व्याख्येयम् । | ५१ |
| २४. | "जगत्यपर्याप्तसहस्रे"ति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारप्रदर्शनपूर्वकं व्याख्येयम् । | ५२ |
| २५. | "उदीर्णरागप्रतिरोधक"मिति पद्यं सप्रसङ्गं छन्दःकोशसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा विवृणुत । | ५३ |
| २६. | "उदासितारं निगृहीतमानसै"रिति पद्यं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारोल्लेखपूर्वकं देववाण्या व्याख्येयम् । | ५४ |
| २७. | "उपप्लुतं पातुमद" इति पद्यं सप्रसङ्गं देववाण्या व्याख्यायताम् । | ५५ |

| क्रमाङ्काः | विषयाः | पृष्ठाङ्काः |
|---|---|---|

| क्रमाङ्काः | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| ४२. | "षड्गुणाः शक्तय" इति पद्यं सप्रसङ्गं छन्दोऽलङ्कारनिर्देशपूर्वकं व्याख्येयम् । | ७१ |
| ४३. | "अनिर्लोडितकार्यस्ये"ति पद्यं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारोल्लेखपूर्वकं देववाण्या व्याख्येयम् । | ७२ |
| ४४. | सर्वकार्यशरीरेषु" इति पद्यं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा विवृणुत । | ७३ |
| ४५. | "मन्त्रो योध इवाधीर" इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा व्याख्यायताम् । | ७४ |
| ४६. | "विपक्षमखिलीकृत्ये"ति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं देववाण्या व्याख्यायताम् । | ७५ |
| ४७. | "उपकर्त्राऽरिणा" इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं देववाण्या व्याख्यायताम् । | ७६ |
| ४८. | "त्वया विप्रकृतश्चैद्य" इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं संस्कृतभाषया व्याख्येयम् । | ७७ |
| ४९. | "विराद्ध एवं भवता" इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं देववाण्या व्याख्येयम् । | ७८ |
| ५०. | "तुल्येऽपराधे" इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा व्याख्येयम् । | ७९ |
| ५१. | "स्वयं प्रणमते" इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं देववाण्या व्याख्येयम् । | ८० |
| ५२. | "हते हिडिम्बरिपुणा" इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं देववाण्या विवृणुत । | ८१ |
| ५३. | "अन्यदुच्छृङ्खलं सत्त्व"मिति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं संस्कृतेन व्याख्येयम् । | ८१ |
| ५४. | "यजतां पाण्डव" इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं देववाण्या व्याख्येयम् । | ८२ |
| ५५. | "प्राप्यतां विद्युता"मिति पद्यं सप्रसङ्गं सवैशिष्ट्यं सुरगिरा व्याख्यायताम् । | ८३ |

माङ्काः | विषयाः | पृष्ठाङ्काः

क्रमाङ्काः विषयाः पृष्ठाङ्काः



चतुर्थसर्गः

## प्रश्नपत्रागतप्रश्नोत्तरभागः

॥ श्रीः ॥

# शिशुपालवध-रहस्यम्

## ( १-४ सर्गात्मकम् )

---

### मङ्गलाचरणम्

अमन्दानन्दसन्दोहशब्दतत्त्वार्थरूपिणे ।
विश्वात्मने नमस्कृत्य गुणातीताय ब्रह्मणे ॥ १ ॥
मातरम्पितरञ्चैव प्रवुद्धांश्च गुरूनपि ।
प्रणम्य सर्वदेवांश्च मातृभूमिम्प्रतिष्ठिताम् ॥ २ ॥
नत्वा रामप्रसादाख्यान् गुरून् विद्यानिधीनपि ।
येभ्योऽर्जिता मया विद्या शब्दशास्त्रं विशेषतः ॥ ३ ॥
शिशुपालवधस्येदमादिसर्गचतुष्टयम् ।
प्रश्नोत्तरमुखाधीनं रहस्यं सम्प्रकाश्यते ॥ ४ ॥
छात्राणामुपकाराय परीक्षाब्धौ निमज्जताम् ।
अशोकचन्द्रगौडेन छात्राणां हितकाम्यया ॥ ५ ॥

### समालोचनात्मको भागः

### ग्रन्थकारो महाकविर्माघः

**प्रश्नः १**—महाकवेर्माघस्य जीवनवृत्तं काव्यनिर्माणवैशिष्टयञ्च सयुक्तिकं प्रतिपाद्यताम् । ( सन् १९८० )

**उत्तरम्**—संस्कृतसाहित्ये भावपक्षेण सह कलापक्षस्य, कवित्वेन सह वैदुष्यस्य हृदयेन सह मस्तिष्कस्य च सामञ्जस्यं विधाय या कविताधारा भारविणा प्रवाहिता, तस्याः सुषमा श्रीमाघे दृग्गोचरतामेति । महाकवेः कालिदासस्य भावना भागीरथ्या कविरवेर्भारवेः कला कलिन्दनन्दिन्या भट्टेर्वैदुष्यपूर्णसरस्वत्या सनाथितं तीर्थराजमिव कविराजं श्रीमाघं समासाद्य सहृदयस्य रसावगाहनेन कृतार्थता नैसर्गिकी राजते । अत एव साहित्यप्रणयिवर्गे संसरत्येव सूक्तिरेषा—

"उपमा कालिदासस्य भारवेरर्थगौरवम् ।
नैषधे पदलालित्यं माघे सन्ति त्रयो गुणाः ।।"

वंशो देशश्च—महाकविर्माघो गुर्जरदेशे "श्रीमाल". इत्यभिधेये स्थाने विशिष्टे ब्राह्मणपरिवारे जन्म लेभे । वंशेऽस्मिन् जप-तप-दान-स्वाध्यायप्रवचनाग्निहोत्रातिथिशुश्रूषाप्रभृतिवैदिककर्मकाण्डादयोऽनवरतरूपेण प्रवर्तमाना आसन् । कविकुलकमलदिवाकरस्य महाकवेर्माघस्य पितुर्नाम "दत्तक" आसीत् । सः परमोदारः क्षमावान्, विनीतो, धर्मवांश्च ब्राह्मण आसीत् । सर्वैः सह सौजन्यपूर्णव्यवहारकरणाद्, यथाशक्ति सर्वेषां साहाय्यकरणात्, सर्वेभ्य आश्रयदानाच्चायं "सर्वाश्रय" इति नामान्तरेणापि प्रसिद्धो बभूव । अस्य पितामहः "श्रीसुप्रभदेव" नामा, "श्रीवर्मल" नाम्नो राज्ञः प्रधानसचिवः, धर्मसचिवः, प्रधानसेनापतिश्चाऽसीत् । राजा श्रीमतः सुप्रभदेवस्योपदेशानतिश्रद्धया स्वीकरोतिस्म, तदनुकूलश्चाऽचरतिस्म । श्रीवर्मलस्तस्य बुद्धिमत्तया, वीरतया, धैर्येण चातीव प्रभावित आसीत् । स सुप्रभदेवो देववद् विशुद्धचरित्रसम्पन्न आसीत् । स यथासमयं सीमितं, भविष्यति काले हितसाधकञ्च वार्तालापं करोतिस्म । श्रीमाघस्य चरित्रमेतादृशस्य पितुः पितामहस्य च व्यक्तित्वेनातीव प्रभावितमजायत ।

कालः—श्रीवल्लालपण्डितेन सङ्गृहीते भोजप्रबन्धे महाकवेर्माघविषये, माघपत्न्याः दानशीलताविषये च बहुचर्चितमस्ति । प्रबन्धचिन्तामणिग्रन्थेऽपि जैनाचार्यश्रीमेरुतुङ्गाचार्येण माघकवेः पितुः परमोत्कृष्टमैश्वर्यं वर्णयता माघस्य तत्पत्न्याश्च चरित्रचित्रणं भोजप्रबन्धवदतीव विस्तरेण विहितम्, भोजप्रबन्धस्यानेकाः श्लोकाश्च यथावदुद्धृताः । "प्रबन्धचिन्तामणि"-नामाभिधेयस्य ग्रन्थस्य रचना सं० १४६१ वैक्रमाब्देऽजायत । श्रीप्रभाचन्द्रप्रणीतस्य 'प्रभावकचरितस्य' चतुर्दशश्रृङ्गे चापि माघकवेः पितुः, पितामहस्य, निवासस्थानस्य, आश्रयदातुः श्रीवर्मलस्य च वर्णनं विहितम् । प्रभावकचरितस्यास्य रचनाकालः सं० १३३४ वैक्रमाब्दः स्वीक्रियते ।

उक्तं ग्रन्थत्रयमाधारीकृत्य महाकवेर्माघस्य समयोऽनेकैर्विद्वद्भिरेकादशशतकमिति स्थिरीकृतम्[1], यतो हि धाराधीश्वरस्य, विद्वदाश्रयपदस्य राज्ञो भोजस्य शासनकालः सं० १२४९ वैक्रमाब्दोऽस्ति । किन्तु भोजप्रबन्धे कालिदासविषयेऽप्यागतान्यनेकानि वर्णनान्यैतिहासिकैर्नं स्वीक्रियन्ते । वस्तुतस्तु भोजप्रबन्धस्य रचना राज्ञो भोजदेवस्य प्रशंसादृष्ट्यैव विहिता, तद्रचनाप्रसङ्गे च तात्कालिका-

१. द्र० डॉ० भोलाशङ्कर व्यास—संस्कृत कवि दर्शन ।

कालिकानामनेकेषां विदुषां चर्चा तत्र विहिताऽस्ति । अत एव तदाधारीकृत्य ाकवेर्माघस्य कालो वैक्रमैकादशशतकमिति स्वीकरणं न युक्तियुक्तं वक्तुं यते ! एवं प्रबन्धचिन्तामणिः, प्रभावकचरितञ्चेत्येतावुभावपि भोजप्रबन्ध-था एव ग्रन्थौ; अत एव तदाधारेणापि महाकवेर्माघस्य समयः एकादशशतक-ते स्वीकरणं सर्वथाऽनुचितमेव प्रतीयते ।

श्रीमता आनन्दवर्द्धनाचार्येण स्वकीयस्य "ध्वन्यालोक"स्य "अलङ्कारान्त-ापि[1]........." कारिकायाः वृत्तौ महाकवेर्माघप्रणीतस्य शिशुपालवधस्य साकुलः परिपतन्[2] ....." तथा "रम्या इति प्राप्तवतीः पताकाः[3]......" श्लोकद्वयमुदाहरणरूपेण समुद्धृतम् । श्रीमत आनन्दवर्द्धनाचार्यस्य समयः ैशवीयशतकमिति स्वीकृतम्, अत एव तत्पूर्वमेव महाकवेर्माघस्य कालः र्तव्यः । श्रीवामनाचार्येण काव्यालङ्कारसूत्रवृत्तौ "सम्भाव्यधर्मस्य[4] तद्-कल्पनातिशयोक्तिः" इति सूत्रस्योदाहरणे महाकविमाघप्रणीतस्य शिशुपाल-हाकाव्यस्य "उभौ यदि व्योम्निपृथक् प्रवाहौ[5]......" इति श्लोकः समु-। अत एवाष्टमशतकस्यान्ते, नवमशतकस्याऽदौ च स्थितस्य वामना-स्यानन्तरं माघस्य कालनिर्धारणं कथं न्यायसङ्गतं भवितुमर्हति ? महा-माघेन शिशुपालवधमहाकाव्यस्य द्वितीये सर्गे "अनुत्सूत्रपदन्यासा सद्वृत्तिः न्धना"[6] इति श्लोके न्यासस्य काशिकायाश्च नाम गृहीतम् । महाकवि-ा हर्षचरिते न्यासग्रन्थस्य चर्चा विहिता । बाणस्य समयः षष्ठशतकस्य चरणमिति स्वीक्रियते, काशिकावृत्तेश्च रचनाकालः षष्ठशतकस्य मध्यभागः क्रियते, अत एव तदाश्रित्यापि माघस्य समयः सप्तमशतकमिति स्वीकरणं युक्तं प्रतीयते ।

संस्कृतमहाकाव्यानां रचनया ख्यातिप्राप्तानां दशमहाकवीनां समयानुसारं निर्देशकम्—

---

१. ध्वन्यालोकः, २।२७।
२. शिशुपालवधम्, ५।२६।
३. तदेव, ५।५३।
४. काव्यालङ्कारसूत्रवृत्ति, ४।३।१०।
५. शिशुपालवधम, ३।८
६. शिशुपालवधम्, १।११२।

"आदौ कालिदासः स्यादश्वघोषस्ततः परम् ।
भारविश्च तथा भट्टिः कुमारश्चापि पञ्चमः ॥
माघरत्नाकरौ पश्चाद्धरिश्चन्द्रस्तथैव च ।
कविराजश्च श्रीहर्षः प्रख्याताः कवयो दश ॥"

इति श्लोकद्वयमाधारीकृत्यापि कुमाररत्नाकरकव्योर्मध्यवर्तिनो महाकवेः स्य समयः सप्तमशतकमेव सिद्ध्यति । यद्यपि "प्रभावकचरिते" चर्चि "उपमितिभवप्रपञ्च" नाम्नः कथाग्रन्थस्य समाप्तौ समुल्लिखितं सं० ९६२ इति ग्रन्थरचनाकालमाश्रित्य शर्मण्य( जर्मनी )देशीयैतिहासिकेन डॉ० क्लॉटमहोदयेनापि महाकवेर्माघस्य समयो दशमशतकमिति स्वीकृतम्, तद्देशीयेनैव डॉ० याकोबीमहोदयेन माघकवेः समयस्य सप्तमशतकादुत्तरव न स्वीकृतम् ।

महाकवेर्माघस्य पितामहस्य "श्रीसुप्रभदेवस्य" आश्रयदातुः "श्रीव नाम्नो राज्ञ एको शिलालेखः किञ्चिद्दिवसपूर्वं "वसन्तगढ"-नगरे समुपलब स शिलालेखः सं ६८२ वैक्रमाब्दे लिखित इति प्रतीयते । अतः सं० वैक्रमाब्दे ( तदनुसारं ६२५ ईशवीये वर्षे ) "श्रीसुप्रभदेवस्य" कालमा तत्पौत्रस्य महाकवेर्माघस्य समयः सप्तमेशवीयशतकस्यान्तभागः, अष्टम कस्याऽदिभागो वेति स्वीकरणं सर्वथा युक्तियुक्तं वर्तते ।

महाकवेर्माघस्य जन्मस्थानम्—शिशुपालवधमहाकाव्यस्य प्राचीनतमा कामु प्रतिषु प्रत्येकसर्गस्य पुष्पिकायाम्—

"इति श्रीभिन्नमालववास्तव्यदत्तकसूनोर्महावैयाकरणस्य माघस्य कृ शिशुपालवधे महाकाव्ये······" इति लिखितमवलोक्यते । अतः सम्भ यदेतांपुष्पिकामाश्रित्यैव श्रीप्रभाचन्द्रेण स्वरचिते "प्रभावकचरिते"-नामा प्रबन्धेऽपि—

"अस्ति गुर्जरदेशोऽन्यसज्जराजन्यदुर्जरः । तत्र श्रीमालमित्यस्ति पुरं म मिव क्षितेः ।······। तत्रास्ति हास्तिकाश्वीयापहस्तितरिपुव्रजः । नृपः श्रीव लाताख्यः शत्रुमर्मभिदक्षमः । तस्य सुप्रभदेवोऽस्ति मन्त्री मिततपाः किला

इत्येताः श्लोका लिखिता भवेयुः । माघकाव्यस्य प्राचीनायाः प्रतेस्स मन्ते लिखितायां पुष्पिकायां समुल्लिखितः "भिन्नमालवः" "प्रभावकच

१. प्रभाचन्द्र—प्रभावकचरितम्, १४।५-१० ।

"श्रीमाल" इति दृश्यते। माघकाव्यस्य प्रायः पञ्चशतवर्षानन्तरं षट्शतवर्षा-न्तरं वा रचितस्य "प्रभावकचरितस्य" रचनाकाले सम्भवतः "भिन्नमालव"-स्यैव नामान्तरं "श्रीमाल" इति संवृत्तं भवेत्। "श्रीमाल" नगरमिदं सम्प्रति राजस्थानगुर्जरप्रदेशसीमायामवस्थितं वर्तते, राज्ययोरुभयोः "श्रीमाली" जातीया ब्राह्मणा अद्यापि निवसन्ति। महाकविमाघकृतेन रैवतकपर्वतस्य परमोत्कृष्टवर्णनेनापि तत्र माघकवेर्ममत्वं प्रतीयते, अत एव गुर्जरप्रदेशेऽवस्थितं "श्रीमाल"-नगरमेव महाकवेर्माघस्य जन्मभूमिरासीदिति सिद्ध्यति।

महाकवेर्माघस्य पाण्डित्यम्, काव्यनिर्माणवैशिष्ट्यञ्च—महाकविमाघप्रणीत-स्याऽन्यस्य कस्यचिदपि ग्रन्थस्य रचनाया विवरणं नोपलभ्यते, किन्तु चतुर्दश-शतकीयेन, माघस्य "सन्देहविषौषधि" व्याख्यातृवल्लभदेवभिन्नेन, वल्लभदेवेन स्वकीये "सुभाषितावलि" इति नामधेये ग्रन्थेऽधोलिखितौ श्लोकौ माघकवेः रचनात्वेन समुद्धृतौ—

"शीलं शैलतटात् पतत्वभिजनः सन्दह्यतां वह्निना
मा श्रौषं जगति श्रुतस्य विफलक्लेशस्य नामाप्यहम्।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु मे सर्वदा
येनैकेन विना गुणास्तृणबुसप्रायाः समस्ता अमी" ॥ १ ॥

"नारीनितम्बफलके प्रतिवध्यमाना हंसीव हेमरसना मधुरं ररास।
तन्मोचनार्थमिव नूपुरराजहंसाश्चक्रन्दुरार्तमुखरं चरणावलग्नाः" ॥ २ ॥

तथा च क्षेमेन्द्रेण स्वकीये "औचित्यविचारचर्चा" इत्यभिधेये ग्रन्थे तत्त्वौ-चित्यस्य प्रत्युदाहरणेऽधोलिखितः श्लोको माघकृतत्वेन समुद्धृतः—

"बुभुक्षितैर्व्याकरणं न भुज्यते पिपासितैः काव्यरसो न पीयते।
न विद्यया केनचिदुद्धृतं कुलं हिरण्यमेवार्जय निष्फलाः कलाः॥"

एभिः श्लोकैरनुमीयते यन्माघस्याऽन्योऽपि कश्चन ग्रन्थ आसीत्, अथवेदमपि सम्भाव्यते यदेते श्लोकाः माघस्याऽन्यासां कृतीनां स्युः। अस्तु, त्रिषु श्लोकेषु प्रथमेन प्रतीयते यन्माघः सुशीलोऽनेकाभिजनशाली, शास्त्रज्ञाता, बलशाली चाऽऽसीत्, तृतीयश्लोकेन च प्रतीयते यन्माघो व्याकरणशास्त्रस्य धुरन्धराचार्यः, काव्यरसिकः, उत्तमवंशीयश्चाऽऽसीत्। इदमपि प्रतीयते यत् कदाचित् भीषण-दुर्घटनाकारणेनाऽयमकिञ्चनो भूत्वा भिक्षुकः संवृत्त आसीत्। सम्भाव्यते यदि-दमेवाश्रित्य श्रीवल्लालपण्डितेन भोजराजप्रशंसापरके भोजप्रबन्धे माघविषये उक्तकथायाः समावेशः कृतो भवेत्। "शिशुपालवधमहाकाव्य"स्याऽद्यन्तं

सम्यक्परिशीलनेनेदन्तु स्पष्टमेव भवति, यन्महाकविमाघः कदाचित् परमैश्वर्य सम्पन्नः, कुलीनो, महावैयाकरणो विद्वानासीत्, अस्य काव्यरसिकत्वस्य प्रत्यक्ष प्रमाणन्तु शिशुपालवधमहाकाव्यमेव । सममेवाऽनया कृत्या पूर्णरूपेण सिद्ध्यति यन्माघो वेद-वेदान्त-उपनिषद्-धर्मशास्त्र-मन्त्र-तन्त्र-योगशास्त्र-पुराणेतिहास भूगोल-छन्दो-ज्यौतिष-कामतन्त्राऽऽयुर्वेद-सङ्गीत-सामुद्रिकशास्त्र-राजनीति-हय-शास्त्रगजशास्त्रादिषु पूर्णतया निष्णात आसीत् । यद्यपि शिशुपालवधस्य प्रथमस नारदकृतया, चतुर्दशसर्गे च भीष्मपितामहकृतया कृष्णस्तुत्येदं स्पष्टमे यदयं सनातनवैदिकधर्मस्याऽनुयायी, परम्परागतप्रथायाः पोषक आसीत्, तथा बौद्धजैनादीनामन्यतमग्रन्थानामप्यनेन पूर्णतः परिशीलनं विहितमासीत् । माघे कस्याऽपि विषयस्य वर्णनं तस्याऽन्तस्तले प्रविश्य सूक्ष्मनिरीक्षणेन सहैव विहि तम् । प्रकृतेः सूक्ष्मनिरीक्षणे महाकवेर्माघस्याऽतिदूरदर्शिनी दृष्टिरासीत् । समम माघेन गभीराणामपि विषयाणां वर्णनमेतादृशसारल्येन विहितं यद् विषय दर्पणवत् स्पष्टं भासते । अस्य कृतौ प्रायः कोऽपि श्लोकोऽलङ्काररहितो दृश्यते । अलङ्कारस्यैतादृशप्राचुर्येऽपि कस्मिंश्चिदपि श्लोके माघेनाऽलङ्कार बलात्कारेण न समाविष्टः । विकटयुद्धप्रसङ्गे विकटबन्धानां रचनाद्वाराऽस्या गाधपाण्डित्यस्य परिचयः प्राप्यते । शिशुपालवधमहाकाव्यस्य पञ्चमे स वर्णितप्रसङ्गावलोकनेन ज्ञायते यन्महाकवेर्माघस्य काले स्त्रीणामवगुण्ठनप्रणाल प्रचलिताऽऽसीत् । तथा हि—

"यानाज्जनः परिजनैरवतार्यमाणा राज्ञीर्नरापनयनाकुलसौविदल्लाः ।
स्रस्तावगुण्ठनपटाः क्षणलक्ष्यमाणवक्त्रश्रियः सभयकौतुकमीक्षते स्म[1] ॥"

तथा च माघकाले भारतवर्षेऽन्यदेशानां व्यापारिणो व्यापारार्थं जलपोत यानेनाऽऽगच्छन्तिस्म । एवं भारतवर्षस्य वस्तूनामन्येषु देशेषु निर्मातोऽन्येष देशानाञ्च वस्तूनां भारते वर्षे आयातश्चाऽपि भवतिस्मेति शिशुपालवधमहा काव्यावलोकेनेन ज्ञायते । तथा हि—

"विक्रीय दिश्यानि धन्यान्युरूणि द्वैप्यानसावुत्तमलाभभाजः ।
तरीषु तत्रत्यमफल्गु भाण्डं सांयात्रिकानावपतोऽभ्यनन्दत्[2] ॥"

श्रीमाघकीर्तिकल्पलतिकायाः समाश्रयीभूतं शिशुपालवधाख्यमेकमेव महा काव्यं विराजते । महाभारतात् शिशुपालवधाख्यां कथा गृहीत्वा स्वकल्पन

१. शिशुपालवधमहाकाव्यम् ५।१७ ।
२. शिशुपालवधमहाकाव्यम् ३।७६ ।

कौशलेन वैदुष्येण विभूषितं विंशतिसर्गात्मकं महाकाव्यमिदं कवित्वकौशलस्य चूडान्तं निदर्शनं गण्यते । भारवेरनुकरणतया तच्छैलीसाम्यं सर्वत्रैव प्रतिबिम्बितं प्रतिभासते । उभयोः काव्ययोः समारम्भः श्रीशब्देन वर्तते । किराते प्रतिसर्गान्ते लक्ष्मीशब्दवदत्राऽपि श्रीशब्दः प्रयुज्यते । महाकाव्येऽस्मिन् वनेचरवन्नारदस्य समागमनम्, राजनैतिकी मन्त्रणा, पर्वतवर्णनम्, ऋतुसौन्दर्यम्, सैन्यशोभा, युद्धप्रसङ्गः, चित्रकाव्यकौशलमुभयोर्बिम्बभावं विशदतया व्यनक्ति ।

अस्य प्रतिभासीमन्तिनी न केवलं साहित्यसौध एव संराजते; अपि तु तथैव विविधशास्त्रविपिनेष्वपि विहारं विधत्ते । प्रसङ्गपतितानि पद्यतल्लजानि कविवरस्यास्य सर्वशास्त्रीयं विशिष्टवैदुष्यं वदन्ति । एतेन प्रतीयते यत् व्याकृतेः, राजनीतेः, सांख्ययोगबौद्धनयानां, पुराणप्रचयस्य, सङ्गीतस्य, नाट्यशास्त्रस्य, चित्रकाव्यस्य, आयुर्वेदविज्ञानस्य, कामशास्त्रस्य, अश्वमातङ्गादिलक्षणादेः किंबहुना समेषामेव शास्त्राणां तलस्पर्शभाक् विद्वानसौ बभूव ।

"अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना ।
शब्दविद्येव नो भाति राजनीतिरपस्पशा[1] ॥"

इत्येषः श्लोकः कविश्रेष्ठस्य विद्वज्ज्येष्ठस्य सहृदयश्रेष्ठस्यास्य व्याकृतिना सह राजनये विचरतीं प्रतिभां प्रतिपादयति । एवमेव बौद्धदर्शनीयं वैदुष्यं वददिव विभ्राजते पद्यमिदं काव्यजगति—

"सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम् ।
सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम्[2] ॥"

"शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते" इति रूपेण सत्कवेर्या परिभाषा स्वयमेव प्रदत्ता, तस्याः सर्वथाऽनुपालने लग्नचेतसा कविनाऽमुना विमण्डिता स्वीया काव्यसृष्टिः । शब्दालङ्कारवर्गे श्लेषयमकानुप्रासप्रदर्शनेन चित्रकाव्यस्यैकाक्षरीश्लोकादिनिर्माणेन चास्य महिमा महीयते, अर्थालङ्कारेषु रूपकोपमोत्प्रेक्षादिनिर्मितिकौशलमद्वितीयमनुपमञ्च । कल्पनाकौशलपुरस्कृता साहित्यिकसभाजिता प्रदत्तघण्टामाघो नामोपमा निदर्शनीक्रियते । तथा हि—

"उदयति विततोर्ध्वरश्मिरज्जावहिमरुचो हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम्[3] ॥"

---

१. शिशुपालवधमहाकाव्यम्, २।११२ । २. तदेव, २।२८ ।
३. तदेव, ४।२० ।

शब्दालङ्कृतिचमत्कृतिविषयिणी कवितेयं प्रसिद्धैव। उक्तञ्च—

"मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया।
चलितया विदधे किल मेखला कलकलोऽलकलोलदृशान्वया॥"

प्रश्नः २—"नवसर्गगते माघे नवशब्दो न विद्यते" भणितेरस्याः सार्थकत्वं सयुक्तिकं समुपपादयत। (सन् १९७९)

उत्तरम्—सर्वेषामेव रसानां साधिकारं परिपोषरतेन च सहृदयपरितोषं विदधता महाकविमाघेन प्राधान्येन वीरो रसस्तदङ्गतया च सर्वेऽन्ये रसाः यथास्थानं विन्यस्ताः। रैवतकवर्णनम्, सूर्यास्तादिवर्णनम्, सागरवर्णनमित्यादिस्थलानि प्रकृतिप्रियत्वामस्य प्रतिपादयन्ति।

यद्यपि प्रायः षोडशविधे छन्दोनिचये सरति महाकवेर्माघस्य भारती, तदपि पञ्चमसर्गीयाया वसन्ततिलकाया एकादशसर्गीयायाः मालिन्याः सौषम्यं सर्वातिशायि संशोभते। व्यये विहिते वर्धमानस्य भारतीकोशस्य महिमाऽसौ प्रतिभाति यत् सर्वत्र नवनवां शब्दराशिं वितन्वन्नसौ नवसर्गेषु कवीनामन्येषां कृते शब्ददारिद्र्यं विहितवान्। तथा हि—

"नवसर्गगते माघे नवशब्दो न विद्यते।"

भोजादिप्रशंसितं परमप्रसिद्धं पद्यमेकं निदर्शनीक्रियते—

"कुमुदवनमपश्रि श्रीमदम्भोजषण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिलसितानां हा विचित्रो विपाकः॥"

प्रश्नः ३—माघस्य "घण्टाकविः"इत्युपनाम्नि युक्तिं प्रदर्शयत। (१९८३)

उत्तरम्—माघस्य काव्यगतानि प्राकृतिकानि मानुषाणि वा वर्णनान्यतीव सजीवानि सन्ति। प्रत्येकं वर्णने स्वाभाविकत्वं पूर्णतया प्रदर्शितम्। एतैरेव स्वाभाविकैर्वर्णनैः कवेः पर्यवेक्षणशक्तेः पूर्णः परिचयः समुपलभ्यते। कस्याऽपि वस्तुनो विस्तरेण वर्णनस्य प्रतिभाऽपि माघे विशेषतोऽवलोक्यते। एकस्मिन् समग्रे सर्गे श्रीकृष्णस्य भगवतो यात्राया वर्णनं पूर्णं जातम्, यद् यथार्थत्वेन पूर्णमस्ति। प्रभातवर्णनेन यात्रावर्णनेन चैतत् सर्वथा परिपुष्टं जायते। माघकृतं रैवतकपर्वतस्याऽऽलङ्कारिकं वर्णनमप्यतीव रोचकमस्ति। महाकविना माघेन कृतानि ऋतु-जलक्रीडा सन्ध्या-चन्द्रोदयादिवर्णनान्यालङ्कारिकाणि साम्प्रदायिकानि च सन्ति।

रैवतकं परितो दृष्टिं निक्षिपन्तु। कविना तत् कीदृशविशालहस्तीरूपेण प्रदर्शितम्। तथा हि—

"उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम्।
वहति गिरिरयं विलम्बिघण्टा-द्वयपरिवारितवारणेन्द्रलीलाम्॥"[1]

रैवतकपर्वतस्य प्रातःकालीनायाः सुषमाया वर्णनमस्ति। रज्जुभिरिवोपर्युन्नताभिः रश्मिभिर्युक्तो भगवान् भास्करो रैवतकमेकत उदयति, अन्यतश्च चन्द्रोऽस्तं याति। अतः प्रतीयते यद् रैवतको गिरिरयं तादृशगजेन्द्रवच्छोभते, य उभयतो घण्टाद्वयेन वेष्टितोऽस्ति। महाकवेर्माघस्य कल्पनयैतयैव मुग्धा भूत्वा प्राचीनास्समालोचकाः महाकविं माघं "घण्टामाघ" इत्यभिधया "घण्टाकवि" नाम्ना वा कथयामासुः। वस्तुतस्त्वियं कल्पना महाकवेर्माघस्योर्वरस्य मस्तिष्कस्य मनोहर उत्पादोऽस्ति।

## माघे सन्ति त्रयो गुणाः

प्रश्नः ४—"माघे सन्ति त्रयो गुणाः" भणितेरस्याः सार्थक्यं सयुक्तिकं समुपपादयत। (१९६९)

उत्तरम्—संस्कृतसाहित्ये पाण्डित्यमयशैल्याश्चरमोत्कर्षो श्रीमाघे दृश्यते। कालिदासस्योपमाभागीरथी, भारवेरर्थगुरुता-यमुना, दण्डिनो हर्षस्य वा पदलालिता-सरस्वती तीर्थराजसदृशे सकलकलादक्षे कविराजेऽत्र तीर्थराजे यथा विराजते। अत एव कविवैशिष्ट्यबोधिनी सूक्तिरेषा "माघे सन्ति त्रयो गुणाः" इति गुणत्रयवासभूमित्वमस्य बोधयति।

यद्यपि केषाञ्चिद् विदुषां मतमिदं यदेषा भणितिः कस्याऽपि माघभक्तस्योक्तिरेव, किन्तु वास्तवे विद्यतेऽत्रापि सत्यता। माघे कालिदासवद् उपमावैशिष्ट्यं मा भूत्, किन्तु तस्य कमनीयोपमालङ्कृतिभिः अलङ्कृता कविताकामिनी बिभ्राजत एव। एवमेव भारविवन्माघे केवलमात्रमर्थगौरवमेव मास्तु, परन्तु राजते तदीयकवितासु कमनीयमर्थगौरवमपि। माघस्य शब्दशय्या तु प्रसिद्धतमा, नात्र मनागपि शब्दक्रमविपर्ययो विधातुं शक्यते। अत एव मर्मज्ञस्य धर्मपालस्य भणितिरेषा सर्वथा सत्यतानुप्राणिता प्रकाशते संस्कृतवाङ्मये—

"माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे।
स्मरन्तो भारवेरेव कवयः कपयो यथा॥"

सर्वविधशास्त्रीयवैदुष्यसम्भूतस्य माघस्य शब्दशास्त्रीयज्ञानं सर्वान् कवि-

---

१. शिशुपालवधमहाकाव्यम्, ४।२०।

वरानतिशेते । यतो माघापरपर्याये शिशुपालवधे नवसर्गातिक्रान्ते सति नवशब्दो न कोऽपि वर्तते । यथोक्तम्—

"नवसर्गगते माघे नवशब्दो न विद्यते ।"

भारवेः प्रवाहितां कवीनां कलामयीं काव्यसरणिं विकासयताऽनेनापि "शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते" इति स्वीया काव्यपरिभाषा प्रदत्ता । महाकवेर्माघस्यैका प्रशस्यतरा शास्त्रीयोपमा कीदृशी चमत्कारिणी सती राजते साहित्यक्षेत्रे—

"अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना ।
शब्दविद्येव नो भाति राजनीतिरपस्पशा ॥"

स्वमहाकाव्यस्य समारम्भे नारदागमनप्रस्तावे विद्यमानोपमा मोहयन्तीव मनांसि । अग्रेऽपि स्थले स्थले समायातामुपमां विलोक्यास्य महाकवेरुपमा-प्रावीण्ये नास्ति संशयलेशोऽपि । माघस्योपमासु राजते श्लोकोऽयमद्वितीयो, यत्रस्थामुपमां समुपजीव्य माघस्य "घटामाघः" इत्यपरमभिधानं विद्वद्वर्गे प्रचलितमभूत्—

"उदयति विततोर्ध्वरश्मिरज्वा-
वहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टा-
द्वयपरिवारितवारणेन्द्रलीलाम् ॥"

अर्थगौरवक्षेत्रे तु निखिलशास्त्रेषु माघप्रतिभाया वैशिष्ट्यमद्वितीयमेव । यथा राजनीतिसिद्धान्तमूलभूतानां सहायादीनां पञ्चानां बौद्धदर्शनसर्वस्वानां रूपवेदनादिपञ्चानाञ्चाऽङ्गस्कन्धानां सादृश्यं समुपस्थापयत्येषः श्लोकः—

"सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम् ।
सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम् ॥"

द्वितीयसर्गे श्रीकृष्णबलरामोद्धवमन्त्रणापरे राजनयस्य पराकाष्ठा प्रतीयते । तत्र तु गरिमाणं धारयन्तो बहवः श्लोकाः संराजन्ते । यथा समस्तस्यैव गभीरतमस्य राजनयस्य सारसर्वस्वं दधत् पद्यमिदं "घटे सागरसंस्थितिः" इत्यस्य आभाणकस्य निदर्शनतां सन्धत्ते—

"षड्गुणाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः ।
ग्रन्थानधीत्य व्याकर्तुमिति दुर्मेधसोऽप्यलम् ॥"

दण्डिनो हर्षस्य वा पदलालित्यं प्रसिद्धमेव, परन्तु माघस्यापि पदलालित्यं

न्यूनतामावहति । माघेन काव्यारम्भ एव स्वीयं पदलालित्यं प्रकटितम् । किञ्च पदलालित्ये पद्यमिदं सुप्रसिद्धं राजते—

"मधुरया मधुबोधितमाधवी मधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥"

माघकवेः पदलालित्यस्यैकमन्यदुदाहरणं दृश्यताम्—

"नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम् ।
मृदुलतान्तलतान्तमलोकयत् ससुरभिं सुरभिं सुमनोहरैः ॥"

अत्रापि शब्दशय्यायां भासते भगवती भारती । अत एव च "माघेनेव च माघेन कम्पः कस्य न जायते" इत्यादयो यथार्था सूक्तयः सञ्चरति । इत्थं पर्यालोचनेन पदार्थोऽयं निश्चीयते यन्महाकविशेखरे श्रीमाघेऽलङ्कृतिनिवेश-कुशलता, महतोऽर्थस्य स्वल्पशब्दैः प्रतिपादनक्षमता, समुचितसादृश्यशोभिशब्द-सन्निवेशविशिष्टता च विभासतेऽत एव यथार्थैवाऽसौ सूक्तिः—

"माघे सन्ति त्रयो गुणाः" । इति ।

प्रश्नः ५—"माघेनेव च माघेन कम्पः कस्य न जायते" उक्तेरस्याः सार्थक्यं सप्रमाणं सम्यक् सम्पाद्यताम् । ( १९७८ )

उत्तरम्—महाकवेर्माघस्य रचनायां तस्याऽसाधारणाध्ययनस्य, बहुमुखी-नस्यानुभवस्यामिटं छायाङ्कनमिव प्रतीयते । साहित्यस्य सर्वाण्यङ्गानि तस्मै सम्यंगवबुद्धान्यासन् । पदयोजनायां, प्रबन्धनिर्वाहे, वस्तुचित्रणे, भावाङ्कने, यथासम्भवञ्चाऽऽदर्शस्य प्रस्तुतीकरणेऽपि ते परमप्रवीणा आसन् । दिश्यस्यां तर्हि सः कविकुलगुरुकालिदासवत् स्वीकर्तुं शक्यते ।

महाकवेर्माघस्य पर्यवेक्षणमतीवानुपमं वर्तते । रसानामलङ्काराणां, छन्दसां च प्रयोगे स कुशलः शिल्पी वर्तते । तस्य प्रशंसायां कविराजशेखरेणोचित-मेवोक्तम्—

"कृत्स्नप्रबोधकृद्वाणी भारवेरिव भारवेः ।
माघेनेव च माघेन कम्पः कस्य न जायते ॥"

अर्थात्—भगवतः भास्करस्य प्रभाववद् भारवेर्वाण्यपि सम्पूर्णस्यापि विश्वस्य प्रबोधिका वर्तते, किन्तु यस्य समक्षं भास्करस्याऽऽभा मन्दं पतति, एतादृशेन माघमासेनेव प्रतापसङ्कोचकेन महाकविना माघेन, यस्य समक्षं भारवेरपि आभा मन्दं पतति, कस्य कम्पो न जायते ?—इति तत्त्वम् ।

## शिशुपालवधकथाया मूलाधारः

प्रश्नः ६—कं मूलग्रन्थमाधारीकृत्य महाकविना माघेन शिशुपालवधम् काव्यस्य निर्माणं कृतमिति सप्रमाणं प्रतिपाद्यताम्। ( सन् १९८० )

उत्तरम्—श्रीमद्भागवतस्य दशमस्कन्धस्य ७४तमेऽध्याये तथा च म भारतस्य सभापर्वस्य ३३तमात् ४५ पर्यन्तेषु त्रयोदशस्वध्यायेषु—शिशुपा वधस्य कथोपलभ्यते। कथेयं श्रीमद्भागवते किञ्चित् सूक्ष्मरूपेण वर्तते, लिखितमस्ति यद्—राजसूययज्ञे दीक्षितस्य युधिष्ठिरस्य "सर्वप्रथमं कस्य पू विधेया ?" इति पृष्टे सति सहदेवः श्रीकृष्णस्य भगवतः सर्वप्रथमं पूजन न्यवेदयत्, तस्य कथनञ्च सर्वे सदस्या अनुमोदनमकुर्वन्। तदनुसारं युधिष्ठि सर्वप्रथमं श्रीकृष्णस्य पूजने विहिते शिशुपालो भगवन्तं श्रीकृष्णं निन्दयामास तं श्रुत्वा शिशुपालमभद्रशब्दं ब्रुवन्तोऽनेके सदस्याः स्वकर्णाववरुद्धौ कृत्वा सभ स्थलाद् बहिर्गताः, यतो हि "भगवतो निन्दाश्रोताऽपि पातकी भवति" त च सर्वे पाण्डवाः मत्स्याः, केकयः, संजयप्रभृतयश्च राजानः शिशुपालं ह स्वस्वशस्त्राणि धारयामासुः। इदं दृश्यमवलोक्य भगवान् श्रीकृष्णस्तानवरुद्ध स्वयमेव सुदर्शनचक्रेण श्रीशिशुपालस्य शिरश्चिच्छेद।"

महाभारते कथेयमतिविस्तृतरूपेण लिखिताऽस्ति तथा चास्य महाकाव्यस रचनाऽपि महाकविना माघेन महाभारतीयां कथामिमामाश्रित्य विहिता। अने श्लोकास्तु प्रायो महाभारतस्य श्लोकैस्समा अपि दृश्यन्ते। उदाहरणार्थम महाभारतस्य कतिपयाः श्लोकाः समुद्ध्रियन्ते, पश्यन्तु तावत्, श्लोकैरेभिस्स शिशुपालवधमहाकाव्यस्य श्लोकानां कियत् साम्यं वर्तते—

"[1]आचार्यमृत्विजञ्चैव संयुजश्च युधिष्ठिर।<br>
स्नातकश्च प्रियं प्राहुः षडर्घ्यार्हान्नृपं तथा॥<br>
एतानर्घ्यानभिगतानाहुः संवत्सरोषितान्।<br>
त इमे कालपूगस्य महतोऽस्मानुपागतः॥<br>
एषामेकैकशो राजन्नर्घमानीयतामिति।<br>
अथ चैषां परिश्रेष्ठं समर्थायोपनीयताम्॥<br>
ततो भीष्मः शान्तनवो बुद्ध्या निश्चित्य वीर्यवान्।<br>
वार्ष्णेयं मन्यते कृष्णं पूजनीयतमं भुवि॥

---

१. महाभारतम्, २।३६।२३-२५, २७, ३१; शिशुपालवधम्, १४।५५-५ तथा १८।१।

प्रतिजग्राह तत्कृष्णः शास्त्रदृष्टेन कर्मणा।
शिशुपालस्तु तां पूजां वासुदेवे न चक्षमे ॥"
"[1]अथ वाऽभ्यर्चनीयोऽयं युष्माकं मधुसूदनः।
किं राजभिरिहानीतैरवमानाय भारत ॥
विभीषिकाभिर्बह्वीभिर्भीषयन् सर्वपार्थिवान्।
न व्यपत्रपसे कस्माद् वृद्धः सन् कुलपांसनः ॥"
"[2]तथाभूता हि कौरव्या येषां भीष्मः त्वमग्रणीः।
पूतनाद्यात्तपूर्वाणि कर्माण्यस्य विशेषतः ॥
चेतनारहितं काष्ठं यद्यनेन निपातितम्।
पादेन शकटं भीष्म! तत्र किं कृतमद्भुतम् ॥
वल्मीकमात्रः सप्ताहं यद्यनेन धृतोऽचलः।
तथा गोवर्धनो नाम न तच्चित्रं मतं मम ॥"
"[3]भुक्तमेतेन बह्वन्नं क्रीडता नगमूर्द्धनि।
इति ते भीष्म! शृण्वानाः परे विस्मयमागताः ॥"
"[4]पशुवद् घातनं वा मे दहनं वा कटाग्निना।
क्रियतां मूर्ध्नि वो न्यस्तं मयेदं सकलं पदम् ॥"

उपर्युद्धृतानां महाभारतस्याऽनेकेषामुद्धरणानां, शिशुपालवधमहाकाव्यस्य च स्थलानां साम्यतया यद्यपीदं स्पष्टीभवति यन्महाकविना माघेन स्वकृतौ न केवलं महाभारतस्य कथा एव समाश्रिता अपि तु श्लोका अप्याश्रिताः तथापि महाभारतापेक्षया शिशुपालवधमहाकाव्ये महाकविना माघेन महाकाव्योपयोगिनामनेकेषां विषयाणां वर्णनं विहितम्; तृतीयसर्गाच्च त्रयोदशसर्गं यावद् भगवतः श्रीकृष्णस्यैश्वर्य-प्रस्थान-वन-विहार-जलक्रीडा-रैवतकपर्वत-सन्ध्या-प्रातः-प्रकृत्यादिविषयाणां वर्णनानन्तरं महाराजस्य युधिष्ठिरस्य राजसूययज्ञे भगवतः श्रीकृष्णस्याऽऽगमनं वर्णितम्। यद्यपि महाकाव्यस्याऽऽधारः महा-

---

१. महाभारतम्, २।३६।१८, २।४१।१; एवं शिशुपालवधम्, १५।१८-१९।
२. महाभारतम्, २।४१।३ उत्त० ४, पूर्वार्द्धं ८, ९ एवं शिशुपालवधम् १५।३६-३७।
३. महाभारतम् २।४१।१० एवं शिशुपालवधम्, १५।३८।
४. महाभारतम्, २।४४।४० एवं शिशुपालवधम्, १५।५६।

भारतीया कथाऽस्ति, तथापि महाकविना माघेन स्वरचनायां महाभारतव यज्ञसभास्थले एव श्रीकृष्णेन भगवता शिशुपालस्य वधो न कारितः, किन्तु भयपक्षे युद्धार्थं सन्नद्धे सति तुमुलयुद्धानन्तरं शिशुपालस्य वधः कारितः। समये महाभारते शिशुपालकृतया श्रीकृष्णनिन्दया क्रुद्धो भूत्वा सहदेवो भूमौ पा त्रिष्टम्भं विधाय विपक्षिणो भर्त्सयन्नुवाच—

"[1]व्याजहारोत्तरं तत्र सहदेवोऽर्थवद्वचः।
केशवं केशिहन्तारमप्रमेयपराक्रमम्॥
पूज्यमानं मया यो वः कृष्णं न सहते नृपः।
सर्वेषां बलिनां मूर्ध्नि मयेदं निहितं पदम्॥
एवमुक्ते मया सम्यगुत्तरं प्रब्रवीतु सः।
स एवं हि मया वध्यो भविष्यति न संशयः॥"

किन्तु शिशुपालवधमहाकाव्ये न सहदेवः, किन्तु भीष्मपितामह उपर्युक्ता शयमेव वचो व्याजहार। यथा—

"[2]अथ गौरवेण परिवादमपरिगणयँस्तमात्मनः।
प्राह मुररिपुतिरस्करणक्षुभितः स्म वाचमिति जाह्नवीसुतः॥
विहितं मयाऽद्य सदसीदमपमृषितमच्युतार्चनम्।
यस्य नमयतु स चापमयं चरणः कृतः शिरसि सर्वभूभृताम्॥"

एतादृशः कथाभेदो महाकविना माघेन कथं विहितः? प्रश्नस्यास्य किञ्चिदपि निर्णायकमुत्तरमद्यावधि नोपलब्धम्। अस्तु।

---

## पात्रचरित्रचित्रणम्

### श्रीकृष्णः

**प्रश्नः ७—शिशुपालवधमहाकाव्यस्य नायकस्य श्रीकृष्णस्य चरित्रचित्र माघमतानुसारं विधीयताम्।**

**उत्तरम्**—मानवसमाजस्य पार्थिवमपार्थिवञ्चोभयमपि जीवनमुन्नतं विधा समाजस्य समक्षमादर्शचरित्रस्याऽऽवश्यकता भवति। महाकविना माघेन स्वकी शिशुपालवधमहाकाव्ये भगवान् श्रीकृष्णो नायकत्वेन, आदर्शपुरुषरूपेण प्रस्तुतः। "शिशुपालवध"-महाकाव्यस्य नायकः श्रीकृष्णो महाभारतीय श्रीकृष्णोऽस्ति। स न केवलमप्रतिमो योद्धा, असामान्यो राजनीतिज्ञः, असा

---

१. महाभारतम्, सभापर्व, ३९।१–४। २. शिशुपालवधम्, १५।४५–४६।

ारणो दार्शनिकश्च अपित्वसाधारणो लोकनायकोऽप्यस्ति । सः षोडशकला-
र्णस्य भगवतः विष्णोरवतारस्त्वस्त्येव । समाजस्य प्रवृत्तिप्रधानानां, निवृत्ति-
धानानाञ्चोभयविधानामपि लोकानां कृते स महत्तम आदर्शोऽस्ति । माघस्य
ातानुसारं प्रलयदशायां जगत् मोक्षदशायाञ्च जीवस्तस्मिन्नेव लयमेति ।
नगृहीतसेन्द्रियमानसा एव स्वाध्यात्मिकनेत्रद्वारा बह्वायासेन तस्य वास्तविकं
वरूपं साक्षात्कर्तुमर्हन्ति ।

माघस्य मते भगवान् श्रीकृष्णो धीरोदात्तः, साक्षिस्वरूपः, प्रकृतिजन्य-
वकृतिविरहितः पुराणः पुरुषोऽस्ति । माघस्यास्मिन् दर्शने सांख्यदर्शनस्य
छायाङ्कनं प्रतीयते; तथापि माघः वेदान्ती, सममेव विशिष्टाद्वैतवादी आसीत् ।
हाकविर्माघो व्यावहारिकजीवने शत्रुनिग्रहं पारमार्थिकजीवने च मनोनिग्रहं
ूर्णतया समर्थयति । शिशुपालवधमहाकाव्यस्य नायके भगवति श्रीकृष्णे, तस्य
ीवने च माघस्याऽऽदर्शः पूर्णतया पल्लवितः, पुष्पितः फलितश्च सञ्जातः ।
भगवान् श्रीकृष्णः शिशुपालेन नैतदर्थं रुष्टो यत् सः सम्प्रत्यपराधं करोति, अपि
चेतदर्थं खिन्नोऽस्ति यत् सः समाजमुत्पीडयति । श्रीबलरामस्त्वेतादृशानां
ापिनां कथामप्यमङ्गलकारिणीं मनुते । समाजस्यैतेभ्यो दुष्टेभ्यः परित्राणस्यैक
एव सरल उपायो यत्तेषां समूलमुन्मूलनं विधीयेत ।

## शिशुपालः

**प्रश्नः ८**—शिशुपालवधमहाकाव्यस्य प्रतिनायकस्य शिशुपालस्य चरित्र-
चित्रणं माघदिशा कुरुत ।

**उत्तरम्**—शिशुपालवधमहाकाव्यस्य प्रतिनायकः शिशुपालः भगवतः
श्रीकृष्णस्य पितृष्वसुः पुत्रः, धर्मराजस्य युधिष्ठिरस्य च मातृष्वसीयः पुत्र
आसीत् । अयं "चेदि"-राष्ट्रस्य शासक आसीत् । माहिष्मती नगरी अस्य
राजधानी आसीत् । अस्य मातुर्नाम "श्रुतश्रवस्" इत्यासीत् । सात्वत(यदुवंश)-
कुलस्य कन्यात्वात् सा "सात्वती"त्यप्युच्यतेस्म । शिशुपालस्य पितुर्नाम
"दमघोष" इत्यासीत् । शिशुपालोऽतीव शूरवीरः, स्वाभिमानी क्षत्रियश्चा-
ऽऽसीत् । मगधदेशस्य राजा जरासन्धः शिशुपालस्याभिन्नः सखा आसीत् ।
यद्यपि श्रीकृष्णेनास्य स्वाभाविको वैर आसीत्, किन्तु रुक्मिणीहरणात्, जरा-
सन्धवधार्थं भीमाय कूटनीतिकमार्गनिर्देशप्रदानात् श्रीकृष्णः शिशुपालस्याक्षि-
कण्टक आसीत् । अत एव सः श्रीकृष्णेन सह योद्धुं किञ्चिद् व्याजमन्वेष-
यतिस्म ।

एकदा यदा भगवान् श्रीकृष्णो नरकासुरस्य वधार्थं गतवानासीत्, तदा

शिशुपालो द्वारकानगर्यामाक्रमणं चकार, बभ्रु नाम्नो यदुवंशिनो देव्याश्च हरणं चकार। तत्र कालयवन-रुक्मि(विदर्भदेशीय राजकुमार)-शाल्व-द्रुमा श्रीकृष्णद्रोहिणो राजानस्तस्य सहायका आसन्। ज्योतिर्विद्भिरेषा भविष्यव विहिताऽऽसीद् यत् शिशुपालः श्रीकृष्णेन भगवता हनिष्यते, अत एव तन् श्रुतश्रवसा भगवान् श्रीकृष्णस्तद्रक्षार्थं प्रार्थितः। भगवान् तस्या इदं प्रादात् यत् सोऽस्य शतमागांसि सहिष्यति। भगवान् श्रीकृष्णः स्वीया प्र पूर्णतया पालिता। राजसूययज्ञे युधिष्ठिरेण कृतं भगवतः श्रीकृष्णस्य पू दृष्ट्वा शिशुपालः धर्मराजं भीष्मं च निन्दयामास, भगवति श्रीकृष्णे चा पाणि कर्तुमारेभे। भगवान् मौनः सन् शिशुपालस्यापराधान् गणयतिस्म। स्तेन स्वसेना सज्जिता युद्धार्थं च श्रीकृष्णः समाहूतः। युद्धे तस्य सेना न शतेष्वपराधेषु च पूर्णेषु, विलम्बमनुचितं मत्वा भगवान् श्रीकृष्णः सुदर्शनच शिशुपालस्य शिरश्चिच्छेद। बाल्यावस्थायां शिशुपालस्य बाहुचतुष्टयं नेत्रत्र श्चाऽऽसीत्। क्षत्रियत्वेऽप्यस्य सर्वे संस्कारा असुखदासन्।

## बलरामः

**प्रश्नः ६—शिशुपालवधमहाकाव्यदिशा बलरामस्य चरित्रचित्रणं क्रियता**

**उत्तरम्**—शिशुपालवधस्य द्वितीयसर्गो बलरामस्य व्यक्तित्वं पूर्णरू प्रकाशयति। श्रीकृष्णस्तु—

> "[1]करदीकृतभूपालो भ्रातृभिर्जित्वरैर्दिशाम्।
> विनाऽप्यस्मदलं भूष्णुरिज्यायै तपसः सुतः॥
> उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता।"

इत्येताभ्यां श्लोकाभ्याम्, "युधिष्ठिरस्य राजसूययज्ञस्त्वस्मदनुपस्थिता भवितुमर्हति, किन्तु सकलविश्वजनोत्पीडकः शिशुपालो नोपेक्ष्य" इत्यु तूष्णीमास्ते बलरामोद्धवयोरभिमतञ्च ज्ञातुमिच्छति। रिपुणा शिशुपा विहितानपराधान् स्मृत्वा बलरामस्योष्ठौ क्रोधातिरेकेण कम्पितौ जातौ, मस च स्वेदकणा अदृश्यन्त। भगवतः श्रीकृष्णस्य विचारान् समर्थयितुं सः सह त्थाय स्ववक्तव्यम्प्रकाशयति। बलरामः क्रोधी, उद्धतश्चाऽऽसीत्, सम विलासिताप्रियश्चाऽप्यासीत्। सोऽतिशयेन मदिरासेवनमपि करोतिस्म।

---

१. शिशुपालवधम् २।९-१०।

"[१]घूर्णयन्मदिरास्वादमदपाटलितद्युति ।
रेवतीवदनोच्छिष्टपरिपूतपुटे दृशौ ॥"

इत्यस्मिन् श्लोके महाकविना माघेन बलरामस्य विलासितापूर्णं जीवनं दिरासेवनञ्च स्पष्टतया निर्दिष्टम् ।

बलरामस्य व्यक्तित्वस्यापरं वैशिष्टयमस्ति तस्य क्षिप्रकारित्वम् । कस्मि-न्नदपि प्रश्नेऽधिककालं यावद् विचारणा न तस्मै रोचते । शीघ्रमेव सः स्वकीयं र्णयमुद्घोषयति । इदमेवास्ति कारणं यद् बलरामः शीघ्रमेव—

"[२]यद्वासुदेवेनाऽदीनमनादीनवमीरितम् ।
वचसस्तस्य सपदि क्रिया केवलमुत्तरम् ॥"

इति श्लोकेन शिशुपालस्योपर्याक्रमणविषये भगवतः श्रीकृष्णस्य विचारान् नसर्थयति । "असन्तुष्टाः द्विजाः नष्टाः सन्तुष्टाश्च महीभृतः" इति नीति-त्रवचनानुसारेणात्यधिकमहिम्ना समन्वितेनापि राज्ञा सन्तोषो न विधेयः, शत्रोः मूलमुन्मूलनं विधाय स्वीयोऽधिकाधिकमभ्युदयः कर्तव्य इति सिद्धान्तेन रामः पूर्णतया सहमतोऽस्ति । श्रीबलरामो भाग्येऽल्पं, पुरुषार्थे चाधिकं श्वसिति । तन्मते स्वार्थसाधनं सर्वोत्कृष्टं पाटवमस्ति । तथा चोक्तं तेन—

"[३]सर्वः स्वार्थं समीहते ॥

## उद्धवः

**प्रश्नः १०—शिशुपालवधमहाकाव्यदिशा उद्धवस्य चरित्रचित्रणं धीयताम् ।**

**उत्तरम्—श्रीबलरामस्य—**

"[४]अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितम् ।
सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ॥"

उक्तिरियं श्रीबलरामोद्धवयोर्व्यक्तित्वस्यान्तर्यं विशेषरूपेण स्पष्टीकरोति । क्तित्वमुभयोः पुरुषयोः परस्परं सर्वथा विपरीतमस्ति । स्वभावेन बलरामो वदेवोग्रः उद्धतश्चास्ति; उद्धवस्तावदेव प्रकृत्या मृदुः, शान्तः संयतश्चास्ति । वेकस्तावदस्ति तस्य व्यक्तित्वस्यासाधारणो गुणः । धैर्यसहिष्णुत्वाभ्या-भ्यामपि गुणाभ्यां तस्य विवेकोऽत्यधिकमेव प्रकाश्यते । सः राजनीतेर्विशेष-ऽस्ति । तन्मतानुसारेण रिपोरेकमेकाधिकं ( द्विसंख्याकं ) वाऽऽगः क्षन्तव्यम्,

१. शिशुपालवधमहाकाव्यम्, २।१६ ।
२. तदेव, २।२२ ।
३. तदेव, २।६५ ।
४. तदेव, २।६२ ।

तच्छोभनं भवति। उद्धवो न केवलं भाग्यवादी, न चैव केवलं पुरुषार्थवा
तन्मतेन यथोत्तमः कविः स्वकवितायां शब्दार्थावुभावपि समानरूपेण प्रतिष्ठाप
तथैव विद्वान् भाग्ये पुरुषार्थे चोभयोरपि विश्वसिति। उद्धवस्येदं मत
यत् कालाभिज्ञस्य राज्ञः कृते सर्वदा क्षात्रतेजः प्रदर्शनमेव नोचितम्। एवं स
क्षमावत्ताऽपि नोचिता। यथासमयमुभयोरप्यावश्यकता जायते। संक्षेपेण
मिदं वक्तुं शक्नुमो यद् उद्धवस्य व्यक्तित्वं तादृशो रत्नाकरोऽस्ति, यः क्षा
विवेकसहिष्णुत्व-राजनीतिज्ञत्वादिभिरनेकैर्गुणरत्नैः सुपूरितोऽस्ति।

## समालोचनात्मकाः प्रश्नाः

प्रश्नः ११—शिशुपालवधमहाकाव्यस्यैतिहासिकं वृत्तं स्वसंस्कृत
प्रकाशनीयम्।

उत्तरम्—महाकविमाघेन प्रणीतं शिशुपालवधमहाकाव्यं विंशतिसर्गेषु
जातम्। तस्यैतिहासिकं वृत्तमधोलिखितमस्ति—

पाण्डवाः प्रथमवनवासदिवसावधिं प्रपूर्य इन्द्रप्रस्थनगरीं समधिकृत
आसन्। भगवतः श्रीकृष्णस्य कृपया अर्जुन-भीम-नकुलसहदेवानाम्पराक्रमेण
धर्मराजयुधिष्ठिरेण समग्रमपि जम्बूद्वीपं विजित्य विपुलं धनमेकस्थीकृतम्।
मतुलसाम्राज्यं विपुलं वैभवञ्चावाप्य युधिष्ठिरो राजसूययज्ञं कर्तुमैच्छत्।
समग्रस्य जम्बूद्वीपस्य (एशियायाः) भगवतः श्रीकृष्णस्यानुयायिनो विरो
नश्च राजानो यज्ञेऽस्मिन्नामन्त्रिता आसन्। यज्ञेऽस्मिन् भगवान् श्रीकृष्णः
कर्मद्रष्टा आसीत्। सर्वेऽपि राजानो यज्ञकार्येषु योग्यतानुसारं भागं गृह्
स्म। ऐतिहासिकोऽयं यज्ञ आसीत्। अतीवमहत्सज्जया यज्ञः सुसम्प
याज्ञिकाः ब्राह्मणाः दक्षिणादिना सत्कृताः।

ततः सदस्यपूजाया अवसरस्समुपस्थितः शास्त्रानुसारेण यज्ञसमाप्तौ गुण
ऽर्घ्यप्रदानस्य नियमोऽस्ति। प्रतिष्ठेयं कस्मै प्रदेया? विषयेऽस्मिन् पप्रच्छ यु
भीष्मम्। शास्त्रानुसारं षडङ्गवेदाध्ययनाध्यापनरतो ब्राह्मणस्नातकः, गुरुः,
जामाता, राजा, ऋत्विग्, याज्ञिकश्चैते षट् सदस्याः पूजनार्हाः भवन्ति।
कश्चन सर्वगुणसम्पन्नः स्यात्तर्हि सोऽपि पूजनार्हो भवति। भीष्मोऽस्यै प्रति
भगवान् श्रीकृष्ण एव महत्तम उद्घोषितवान्। युधिष्ठिरश्च भगवन्तं श्रीकृ
पूजयामास। शिशुपालो भगवतः श्रीकृष्णस्येदं सम्मानं द्रष्टुं नाशकत्। स क्रो
विष्टः रक्तीकृतनेत्रश्च सन् उच्चमुच्चमुष्णञ्च श्वसितुमारेभे। धर्मराजं यु
च निन्दित्वा भगवतः श्रीकृष्णस्योपरि नानाविधानाक्षेपान् कर्तुं प्रवृत्तः।

वान् श्रीकृष्णः मौनावलम्बितः सन् मनसैव शिशुपालस्यापराधान् गणयतिस्म। भीष्मः शिशुपालस्येदं धाष्टर्यं सोढुं नाशकत्, तन्मुखाच्च भगवतः श्रीकृष्णस्य निन्दां श्रुत्वा सः क्षुब्धः सञ्जातः। तेनोक्तम्—"अद्य मया विहिता भगवतः श्रीकृष्णस्य पूजा न यस्मै रोचते सः धनुर्धारयेत्"। इत्युक्ते भीष्मे शिशुपाल-समर्थकाः राजानो यज्ञमण्डपाद् बहिर्गन्तुमुद्यता बभूवुः। शिशुपालः पुनः कठोराणि वचांसि उवाच, तत्स्थानाच्च निःसृत्य भगवन्तं श्रीकृष्णं युद्धार्थमाहूय चमूः सज्जां कर्तुमारेभे। पाण्डवास्तत्पक्षिणश्च राजानः शान्ता आसन्। चमूसज्जां विधाय शिशुपालेन राजसभायां स्वकीयो दूतः प्रेषितः। स दूतः श्लिष्टशब्दैर्भगवन्तं श्रीकृष्णं निन्दयामास। भगवतः श्रीकृष्णस्य प्रेरणया सात्यकिस्तस्याक्षेपाणामुचितमुत्तरम्प्रादात्, तथापि सोऽनेकान्यापत्तिजनकानि वचांस्यकथयत्। अनेन भगवान् श्रीकृष्णस्तत्समर्थकाः राजानश्चात्यन्तं क्रुद्धाः सञ्जाताः। अन्ते च युद्धः प्रारब्ध एव। शिशुपालस्य सम्पूर्णाऽपि चमूर्नष्टा। चम्वां विनष्टायां सत्यां सः स्वयं भगवता श्रीकृष्णेन साकं योद्धुमारेभे। युद्ध्यमानः सः श्रान्तो भूत्वा कठोराणि वचांस्यवदत्। ततः शतसंख्यकेष्वपराधेषु पूर्णेषु, तद्वधेऽधिकं विलम्बमनुचितम्मत्वा भगवान् श्रीकृष्णः सुदर्शनचक्रेण शिशुपालस्य शिरश्चिच्छेद। अस्मिन्नेव समये तस्य शरीरादेकस्तेजःसमूहो निःसृत्य भगवतः श्रीकृष्णस्य शरीरेऽन्तर्हितः। सर्वे चैतेनातीव विस्मिताः बभूवुः।

**प्रश्नः १२—अम्बरादवतरतो भगवतो नारदस्य वर्णनं ग्रन्थोक्तदिशा स्वसंस्कृतेन कुरुत। ( १९७८ )**

**उत्तरम्**—महाकविः श्रीमाघः शिशुपालवधमहाकाव्यस्यारम्भे स्वर्गलोकाद् आकाशमार्गेण भूमाववतरतो भगवतो नारदस्य वर्णनं करोति। नारदः स्वर्गलोकादाकाशमार्गेण द्वारिकापुर्यां भगवन्तं श्रीकृष्णं साक्षात्कर्तुमागच्छति। जगन्निवासः, रुक्मिणीरूपिण्याः लक्ष्म्याः पतिः, भगवान् श्रीकृष्णो वसुदेवसद्मनि वसन् आकाशादवतरन्तं मुनिं नारदं ददर्श। सूर्यस्य गतिस्तिर्यग् अर्थात् पूर्वस्याः दिशः पश्चिमदिशं यावद् भवति, अग्नेस्तूर्ध्वज्वलनं प्रसिद्धम्, परन्तु सर्वतः प्रसरणशीलं तेजोऽधः पतति। किमेतत्? इत्येवं प्रकारेण व्याकुला द्वारिकापुरीनिवासिनो जना अम्बरादवतरन्तं मुनिं नारदं ददृशुः।

भगवान् श्रीकृष्णः आकाशमार्गादवतरन्तं मुनिं नारदं सर्वप्रथमं तेजःपुञ्जमिति निश्चितवान्, तत ईषन्नीचैरागते सति विस्पष्टाकृतिं तां "शरीरी"त्यव-

धारितवान्, ततः सामीप्याधिक्ये सति स्पष्टशरीरावयवं तं कञ्चित् पुरुषम
धारितवान्, क्रमादस्मादन्ते च सः तं "नारदोऽयम्" इत्यबोधि।

नवीनान्, जलपूर्णत्वादतिनीलान्, विपुलान् मेघान्, अधोऽधःस्थित, ए
स्थीकृतकर्पूरचूर्णवद् धवलम्, अत एव मेघसमीपावस्थानक्षणे स्वशरीरे परिधा
रितगजेन्द्रचर्मणा भस्मलेपनाद् गौरवर्णेन शिवेन सदृशं प्रतीयमानं तं पुरुषविशे
भगवान् श्रीकृष्णो "नारद" इत्यबोधि।

कमलकेसरवत् पीतवर्णाः जटाः धारयन्तं, शरत्कालीनसुधांशुकान्तिवद् धवल
अत एव परिपाकपिङ्गलाः, तुषारभूमिसमुत्पन्नाः, लताः धारयन्तं पर्वतरा
हिमालयमिव प्रतीयमानं तं पुरुषविशेषं भगवान् श्रीकृष्णो "नारद" इत्यबोधि।

पीतवर्णमुञ्जनिर्मितमेखलाधारिणं, पुनश्च स्वयं शुभ्रवर्णं, कृष्णवर्णं मृगच
परिदधानं, सुवर्णमेखलाबद्धनीलधौतवस्त्रधारिणं शुभ्रवर्णं बलरामदेहमि
प्रतीयमानं तं पुरुषविशेषं भगवान् श्रीकृष्णो "नारद" इत्यबोधि।

पक्षिराजगरुडकेशवद् दीर्घैः सुवर्णमयभूमिसमुत्पन्नलतासूत्रैर्निर्मितं यज्ञोपवी
परिदधानं, हिमवदतिशुभ्रवर्णम्, अत एव शरत्काले विद्युतां समूहैर्युक्तं, शुभ्रवर्ण
मेघवत् शोभायमानं तं पुरुषविशेषं भगवान् श्रीकृष्णो "नारद" इत्यबोधि।

स्वाभाविकविविधवर्णभास्वराणुलोम्ना, शोभायमानमृणालखण्डवत् शुभ्र
वर्णं, स्वशरीरे धारितेन सुन्दरमृगचर्मणा (अनेकवर्णचित्रितस्य सूक्ष्मसूत्र
युक्तस्य शुभ्रवर्णस्य चैरावतस्य देहे आच्छादितेन) पृष्ठान्तरणेन, देवेन्द्रवाहन
गजराजमैरावतमिव शोभमानं तं पुरुषविशेषं भगवान् श्रीकृष्णो "नारद"
इत्यबोधि।

निरन्तरताडितवीणातन्त्रीसङ्घर्षणोज्ज्वलाङ्गुष्ठनखकिरणमिश्रया, अत एव
पुरोभागे विद्रुमैः प्रवेशितार्धभागयेव विभाव्यमानया, स्वच्छस्फटिकमणिनिर्मित
जपमालया, शोभमानं तं पुरुषविशेषं भगवान् श्रीकृष्णो "नारद" इत्यबोधि।

वायोराघातेन स्पष्टं शब्दायमानैर्व्यवस्थितस्वरसमूहयुक्तैः सप्तभिः स्वरैः
यत्र स्वरसङ्घातरूपषड्जर्षभगान्धारमध्यमादित्रिग्रामस्वराणामारोहावरोहस्य
क्रमः स्पष्टं प्रतीयतेस्म, तां "महतीं" नाम्नीं स्ववीणां पुनः पुनः पश्यन्तं त
पुरुषविशेषं भगवान् श्रीकृष्णो "नारद" इत्यबोधि।

एतादृशो मुनिर्नारदः पृष्ठतः स्वर्गलोकादागतान् कृतप्रणामान् देवान् परा
वर्त्य, आकाशमार्गेण भूमाववतीर्य दैत्यारेश्चक्रधारिणो भगवतः श्रीकृष्णस्य
स्वर्गवच्चारुभवनं द्वारिकापुरीं समाससाद।

प्रश्न १३—स्वाधीतग्रन्थदिशा सुरगिरा रैवतकं वर्णयत । ( १९८३ )

अथवा—

शिशुपालवधस्य चतुर्थसर्गस्य कथा सङ्क्षेपेण स्वसंस्कृतेन लेख्या ।

उत्तरम्—भगवान् श्रीकृष्णः स्वसेनया सह युधिष्ठिरस्य राजसूययज्ञे भागं ग्रहीतुं द्वारिकापुरीतो हस्तिनापुरीं प्रस्थितः । तत्र मार्गे रैवतकपर्वतमवलोकयन् भगवान् गच्छति । तदेव वृत्तं महाकविना माघेन शिशुपालवधमहाकाव्यस्य चतुर्थसर्गे वर्णितम् । तदेवाऽत्र सङ्क्षेपेण वर्ण्यते ।

भगवान् श्रीकृष्ण इन्द्रनीलमणिसम्बद्धनानावर्णगैरिकमनःशिलादिधातुम्, अत एव रत्नकान्तिभिः सह भूमिं विदार्योर्ध्वं निर्गतं सर्पाणां फूत्कारबाष्पमिव स्थितम्; महतीः शिलातटीरुपर्युपरि सर्वतो निरन्तरमुत्पतद्भिः, अत एव मेघसमूहैर्दिवाकरमार्गं पुनरवरोद्धुं विन्ध्याचलपर्वतमिव वर्धमानमिव, स्थितम्; नूतनकान्तिसमूहधारिणां गैरिकमनःशिलादिमणीनां स्वर्णशिखरेषु विस्तृतया वीत्रभग्या युक्तं; इन्द्रनीलमणिश्यामलता मनोहरं, पुष्परसेनाऽऽहूतभ्रमराभिर्लताभिर्युक्तम्, सहस्रसंख्याकैः शिखरैर्गगनं सहस्रैः प्रत्यन्तपर्वतैर्भूमिं व्याप्य स्थितं सूर्यचन्द्रमसं च नेत्ररूपेणावतिष्ठमानम्, तथा चानेकसंख्यैराकाशं पृथिवीं च व्याप्य स्थितं नेत्रीकृतार्केन्दुम्, सत्यं हिरण्यगर्भं ब्रह्माणमिव स्थितम्; शोभनसुवर्णखानियुक्तम्, कस्मिंश्चित् प्रदेशे जलवर्षणाच्छुभ्रवर्णान्, अत एव क्षालितोत्तरीयसमानकान्तियुक्तान् मेघान् दधानम्; अत एव पार्वतीसम्पर्कैकदेशस्थितभसितं शिवमिव स्थितम्, स्वप्रियाप्रियवचनलोलुपानाम्, मदेन चेषच्चपलमन्थराणां हंसादिपक्षिणामुत्पिञ्जरीभूतदलैरूर्ध्वंकपिशीभूतपर्णैः कमलच्छत्रैश्छायां कुर्वाणम्, स्कन्धाधिरूढमनोहरश्यामकण्ठान्, सर्पैर्व्याप्तदेहान्, अभिनयकारणेन चालितलतातुल्यभुजाग्रभागान्, बहून् रुद्रानिव स्थितान्, स्कन्धाधिरूढमनोहरमयूरान् वायुवशाच्चालितानेकलतारूपभुजाग्रभागान् वृक्षान् धारयन्तम्; लम्बमाननीलकमलकर्णाभरणानां लोध्रपुष्पपरागेण गौरवर्णानां स्त्रीणां गण्डस्थलीरिव स्थितानि नवीननीलतृणभूषितसैकतकान्तियुतशैवालयुक्तानि च निर्मलजलानि धारयन्तम्, कमलश्रेणिवशीभूतचञ्चलभ्रमरम्, वृक्षसमूहैरातपमहरन्तम्, मनोरमचूर्णकुन्तलाग्राः देवाङ्गनाः रक्षोभिरनभिभूतम् ( अथवा देवाङ्गनाः धारयन्तम्, राक्षसैरनुपद्रवितम् ) रैवतकं पर्वतं ददर्श ।

रैवतकपर्वतान्तिके वसानाः जनाः श्रेष्ठानि बहुमूल्यानि वा महतीभिः सानुभिर्धारितानि उद्रश्मीन्यपरिमितानि रत्नानि निरन्तरं लभन्तेस्म । रैवतक-

पर्वते पर्वतात् पतितरूप्यशैलो विकसितपुष्पनेत्रसहस्रभाजा, उपरिस्थि नोन्नतेन वृक्षेण सहस्राक्षेन्द्राधिष्ठितैरावतगजवच्छोभतेस्म । तत्र दिवाकरसा थिना अरुणेनान्यथाकृतवर्णाः अर्थात् रक्तिमानमापादिताः सूर्याश्वाः वंशाङ्कु श्यामवर्णैर्मरकतमणिभिः स्वकान्ति ( हरीतिमां ) पुनः प्रापिताः । तत्र समुन्न द्भिर्मेघैर्वर्षितैर्जलैर्मुहुर्मुहुरार्द्रीकृतैः सर्पैर्युक्तं वृक्षाणां वनं विषाग्निसमुद्भ विपत्तिर्न बबाधे ।

भगवता श्रीकृष्णेनानेकवारं दृष्टोऽपि सः रैवतकपर्वतोऽदृष्टपूर्ववद् भगव श्रीकृष्णस्य विस्मयमवर्धयत्, यतो हि यद् वस्तु क्षणे क्षणे नवीनतामुपैति तं रमणीयतायाः रूपं भवति ।

एतादृशस्य रैवतकपर्वतस्य विषयेऽत्युत्सुकं भगवन्तं श्रीकृष्णं प्र तत्सारथिर्दारुकः पर्वतमिममेवं वर्णयामास ।

सूर्योदये चन्द्रास्ते च रैवतकपर्वतोऽयं विलम्बमानघण्टाद्वयवेष्टितो गजरा इव शोभते । कनकभूमीः परितो धारयन्नयं रैवतकपर्वत उच्चेभ्यः शिखरेभ्य निर्झरसमूहानामुद्गच्छद्भिर्जलबिन्दुभिः स्वर्गीयदेवाङ्गनानां कामपीडितशरी सन्तापशान्तिं कुर्वन्ति । जले एकत्रस्फटिकस्य, अन्यतश्च नीलमणेर्द्युतिभिर्गङ्गा यमुनयोः सङ्गमवदस्य रैवतकपर्वतस्य जलाशयो राजते । एकत्र स्वर्णमयभित्ति अन्यत्र रजतमयभित्तिना चायं रैवतकपर्वतो भस्मधवलितः उद्वह्निलोचनः शि इव राजते । विकसितपुष्पप्रतीतचम्पकवत् पिङ्गलवर्णाभिः कनकतटीभिः सुमे वच्छोभमानेन रैवतकपर्वतेन भारतवर्षोऽयमिलावृत इव शोभते । रैवतकपर्व कम्बलमृगाश्चरन्ति, प्रियायुताः सिद्धगणाः विहरन्ति, रात्रावोषधयः प्रकाशन्ते पुष्पितं कदम्बं कम्पीकुर्वन् सुखकरः पवनो वाति । अत्र दारिद्र्यनाशकरत्ना खानयस्सन्ति, किन्नराणाञ्चायं पर्वतो विहारभूमिरस्ति । अत्र "चमरी" त्यभिधाः गावो विशालदेहाः हस्तिनश्च विचरन्ति; इत्यादिप्रकारेण रैवतकपर्वतो ऽयं न केवलं भोगभूमिरपित्वयं सिद्धभूमिरपि; यतो ह्यत्र मैत्री-करुणा-मुदितो पेक्षेतिचित्तशोधकभाजः अत एवाविद्या-अस्मिता-राग-द्वेषाभिनिवेशेति पञ्चक्ले शान् हित्वा लब्धसबीजयोगाः प्रकृतिपुरुषभिन्नत्वेन ज्ञानमवाप्य तामप्यवरोद्धुं कामयमानाऽनेके समाधिभृतो योगिनो वसन्ति । एवं परमश्रेष्ठोऽयं रैवतकपर्वत उन्नमद्भिः श्यामलैर्मेघैर्भवतः स्वागतार्थं वेगेनाभ्युत्तिष्ठतीव ।

## प्रथमसर्गस्य कथासारः

(१४) प्रश्नः—शिशुपालवधस्य प्रथमसर्गस्य कथा सङ्क्षेपेण स्वसंस्कृतेन लेख्या

उत्तरम्—कदाचिद् जगतः शासनार्थं ( सतां रक्षायै, असतां च निग्रहाय ) द्वारिकापुर्यां स्वपितुः श्रीवसुदेवस्य समृद्धिशालिनि राजसदने निवसन् भगवान् श्रीकृष्णस्तेजःपुञ्जवत् प्रतीयमानं, शिरसि पिङ्गलवर्णाः जटाः धारयन्तं, कटिप्रदेशे पीतवर्णमुञ्जमेखलां दधानं, कृष्णवर्णं मृगचर्म परिदधानं, चित्रलमृगचर्मोत्तरीयवस्त्रधारिणं, हस्ते स्फटिकमणिनिर्मितजयमालां धारयन्तं "महतीं"नाम्नीं स्ववीणां पुनः पुनः पश्यन्तम्, आकाशमार्गाद् भूमाववतरन्तं ब्रह्मपुत्रं देवर्षिनारदं ददर्श। पुरः समागते तस्मिन् महात्मनि भगवान् स्वासनादुत्थाय तमर्घ्यादिभिरुपचारैः सत्कृत्य स्वोपरि तस्याशेषतीर्थोपहृतं तेन प्रोक्षितकमण्डलुजलं पाणौ निधाय नतेन मूर्ध्ना स्वीकृतवान्। ततः सः तं मुनिं नारदं यथोचिते आसने उपवेश्य तदाज्ञया स्वयमपि स्वर्णमयमञ्चके उपविश्य सम्मानवचोभिरभिनन्द्य तस्य शुभागमनकारणं जिज्ञासुः स्वाभिप्रायमप्रकटयत्। नारदश्चापि बहुविधाभिः स्तुतिभिर्भगवन्तं प्रत्यभिनन्द्य योगिनामपि तद्दर्शनादधिकं ( भगवद्दर्शनादधिकं ) न किमपि महत्कार्यमिति कृत्वा तद्दर्शनमेव मुख्यरूपेण स्वागमनप्रयोजनमभिधाय प्रसङ्गवशात् शिशुपालमधिकृत्य देवेन्द्रसन्दिष्टं वचः श्रावयामास।

प्राचीनकाले शत्रुभीतिनिर्मुक्तः, रविप्रभः "हिरण्यकशिपु"नामा दैत्यो बभूव। सर्वप्रथमं तेन देवचित्तेषु भयप्रवेशो निहितः। तस्य महाबलशालिनोऽसुरस्य भयङ्करमाक्रमणमाशङ्क्य देवाः पूर्वं स्वरूपसौन्दर्यप्रयोजना अमरावती पुरी, नगराणि च प्राकारपरिखादिना दुर्गाणि कृतवन्तः, अस्त्रशस्त्राणि तीक्ष्णानि, सैन्यानि च सुसङ्घटितानि, सुसज्जितानि शौर्यवन्ति च चक्रिरे, कवचांश्च दुर्भेद्यान् चक्रिरे। स भुवनान्तरेषु सञ्चरिष्णुर्महाबली दैत्यो यत्रापि वसतिस्म, देवगणास्तामेव दिशं त्रिसन्ध्यं नमश्चक्रुः। भगवान् नृसिंहशरीरं धारयित्वा स्वनखैस्तदुरो विदार्य तं जघान। द्वितीयजन्मनि सः देवैस्सह युद्धेन दर्पजन्यकण्ड्वाः विनोदमिच्छन् नितरां भयङ्करो "रावणो" नाम राक्षसो बभूव। सः पर्वतश्रेष्ठं कैलासं समुच्चिक्षेप। स अमरावतीं नगरीं विरूपां चकार, नन्दनवनं पुनः पुनश्छिच्छेद, रत्नानि मुमोष, देवाङ्गनाश्चापजहार एवञ्च स्वर्गस्यास्वास्थ्यं चकार। कुबेरमाक्रम्य सः तस्य पुष्पकविमानं बलेन जहार।

धनुर्निर्मातुं तेन यमराजवाहनस्य महिषः शृङ्गावुत्पाटितौ। रावणभयेन दिवाकरो ग्रीष्मर्तावसमस्तपतनशीलैः स्वरश्मिभिः सभयः स्पृशन् तद्वधूः शीतलस्वेदजलबिन्दुमुक्ताफलैरभूषयत। सुधांशुस्तु सर्वदैव कलासमग्रेण तद्विलासिनीरुत्कण्ठयितुमुदेतिस्म। स्वविलासिनीनां दन्तमयकर्णभूषणनिर्माणेच्छया तेन

गणेशस्यैको दन्त एवोत्पाटितः। पवनस्तु रावणस्य चाटुकारक्रीडासचिववत् सदैव तदिच्छानुसारं वातिस्म। तस्य प्रचण्डप्रतापस्य समक्षमग्निदेवस्य तेजोऽपि मन्दं जातम्। रावणभयात् सर्पाः स्वकीयं भुजङ्गत्वं त्यक्तवन्तः। तस्य गजसमूहप्रताडिताः दिग्गजाः पलाय्य स्वप्राणरक्षां चक्रुः। सर्वदा पुष्पसम्पत्ति धारयन्तः ऋतवः, वर्षा ग्रीष्मेण, हेमन्तर्तुः शरदा सह, शिशिरः वसन्तर्तुशोभया सह मिथुनीभावेन मिलित्वा रावणस्य लङ्कापुर्यां प्रतिवासित्वं प्रापुः। भवन्तं मनुष्यरूपमीश्वरमवगच्छन्नपि अभिमानैकधनः सोऽपहृतां जानकीं न मुमोच।

भवता स्मृतमेव भवेदिदं यद् भवान् दाशरथिरामरूपं धारयन् समुद्रे सेतुनिर्माणं कारयित्वा पयोधिं विलङ्घ्य लङ्कापुरीं निकषा दण्डकारण्याद् जानकीवनितापहर्तारं तं रावणमवधीत्। स एव रावणोऽद्य शिशुपालरूपेणावतीर्य देवानसुरान् राक्षसांश्चानुग्रहीतुं निग्रहीतुं च समर्थो भूत्वा सकलराजचक्रं स्वप्रतापेन पीडयति जिगीषुणा तेन बलदर्पादिदानीमपि जगद् पूर्ववत् प्रपीड्यते। अतो विधेरुल्लङ्घितशासनमेनमुद्दण्डं शिशुपालं भवानवश्यमेव यमराजसदनातिथिं करोतु अर्थात् तद्वधं करोतु।

इत्युक्त्वा नारदस्तूष्णीं बभूव। नारदस्य तद् वचनं श्रुत्वा स्मृतशिशुपालकृतापकारो भगवान् श्रीकृष्णः सञ्जातामर्षः सन् तद्वधार्थं "तथास्तु" इति वचो व्याजहार। प्रस्थिते च महामुनौ नारदे चैद्यं शिशुपालं प्रति क्रुद्धस्य भगवतः श्रीकृष्णस्य भ्रुकुटिच्छलेन तस्य मुखे व्योम्नीवानिशं शत्रुविनाशशिशुनो धूमकेतुराविर्बभूव।

## द्वितीयसर्गस्य कथासारः

**प्रश्नः १५—शिशुपालवधस्य द्वितीयसर्गस्य कथा सङ्क्षेपेण स्वसंस्कृतेन लेख्या। ( १९८३ )**

उत्तरम्—नारदस्य प्रत्यावर्तनानन्तरं धर्मराजस्य युधिष्ठिरस्य राजसूययज्ञे सम्मिलितो भूत्वा साहाय्यकरणार्थं निमन्त्रितेन भगवता श्रीकृष्णेन मित्रकार्यसम्पादनार्थं हस्तिनापुरं, शिशुपालेन सह योद्धुं चेदिदेशं वा गन्तव्यम् इति परस्परविरोधिनोरनयोर्महतोः कार्ययोः कतरदनुष्ठातव्यम् इति सन्दिहानो भगवान् श्रीकृष्णो निर्णयार्थं बार्हस्पत्यार्थशास्त्रविदा राजशास्त्रनिष्णातेन सचिवेन स्वपितृव्येन च तत्रभवता उद्धवेन स्वाग्रजेन महाबलेन बलभद्रेण च सह मन्त्रयितुं सभाभवनमगच्छत्। ततः श्रीकृष्णः "अस्माननन्तरेणापि युधिष्ठिरो लोकविजयि भीमार्जुनादिभिर्भ्रातृभिः सह यज्ञं कर्तुमर्हति, अत एव जगत्पीडकस्य शत्रोरुपेक्षा नोचिता प्रतीयते" इत्येवं

स्वाभिमतं प्रकटयन् स्वसम्मत्यर्थं स्वपितृव्यमुद्धवं बलभद्रं च न्यवेदयत्। पदे अवस्थायाश्च ज्येष्ठत्वाद् यद्यपि उद्धवः पूर्वं वक्तुमैच्छत्, तथापि मदमत्तं क्रोधाधिक्येनोत्पन्नस्वेदबिन्दुभिरार्द्ररक्तवर्णदेहं बलरामं वक्तुमिच्छुकमवगत्य सः तूष्णीं बभूव। ततो बलरामोऽनेकविधाभिर्युक्तिभिर्दृष्टान्तैश्च भगवतः श्रीकृष्णस्य वचनं समर्थयन् शीघ्रातिशीघ्रं शिशुपालं प्रत्याक्रमणार्थं स्वसम्मतिं प्रादात्। ततो भगवता श्रीकृष्णेन स्वमतप्रदर्शनार्थं नेत्रसङ्केतद्वारा प्रेरितः उद्धवो बलरामोक्तां प्रत्येकं वाचं प्रशस्यापि मृद्व्या गिरा तर्कैश्च तिरस्य धर्मराजयुधिष्ठिरस्य राजसूययज्ञे भागं ग्रहीतुमकथयत्। उद्धवेनोक्तं यत् "स्वगुप्तचरनियुक्तिद्वारा शिशुपालपक्षीयराजसु भेदोत्पादनं विधेयम्, स्वपक्षीया राजानश्च युद्धाय सज्जीभूय युधिष्ठिरस्य यज्ञे सम्मेलनार्थं सूचनीयाः। यज्ञेऽस्मत्पक्षीयाः शिशुपालेन सह तत्पक्षीयाः राजानश्चोपस्थिताः भविष्यन्ति। यदा युधिष्ठिरादयः पाण्डवाः भवति भक्त्याधिक्याद् भवतोऽधिकां भक्तिं सत्कारं च करिष्यन्ति तदा मात्सर्यादिनमसहमानश्चपलप्रकृतिः शिशुपालो भवन्तं निन्दयिष्यति, तेन तत्पक्षीयाः राजानोऽपि केचित् तस्मात् पृथग् भविष्यन्ति। एवं भवता पितृष्वस्रे सात्वत्यै "शिशुपालस्य शतमागांसि सहिष्ये" इति या प्रतिज्ञा कृता तस्याः सम्यक् पालने जाते सति यदा भवान् शिशुपालवधं करिष्यति तदा धर्मराजसहायतया सह शिशुपालनिग्रहस्योद्देश्यमपि तत्रैव हस्तिनापुरे स्वत एव पूर्णं भविष्यति।" राजनीतिनिपुणस्य पितृव्यस्य मन्त्रिपदभाजाश्चोद्धवस्य वचनमनुसृत्यैव कार्यानुष्ठानं निश्चित्य भगवान् श्रीकृष्णः सभां व्यसर्जयत्।

## तृतीयसर्गस्य कथासारः

**प्रश्नः १६—शिशुपालवधस्य तृतीयसर्गस्य कथा सङ्क्षेपेण स्वसंस्कृतेन लेख्या।**

**अथवा**

**स्वपठितग्रन्थमाधारीकृत्य श्रीकृष्णस्येन्द्रप्रस्थं प्रति प्रस्थानं वर्णयत्। (१९८४)**

**उत्तरम्**—युद्धविचारस्थगिते सति सौम्यमूर्तिर्भगवान् श्रीकृष्णोऽनेकविधबहुमूल्यश्वेतच्छत्रं, मृणालसूत्रामलं चलच्चामरद्वयं, विविधवर्णरत्नजटितं मुकुटं, पद्मरागमणिजटितं सुवर्णकुण्डलद्वयं, केयूर-कङ्कण-मुक्ताहार-कौस्तुभमणि-मेखला-सारसनप्रभृतीनि भूषणानि, तप्तसुवर्णवद् भासमानं पीताम्बरञ्च धारयित्वा सुदर्शनचक्रं, कौमोदकीं गदां, नन्दकं खड्गं शार्ङ्गं धनुः पाञ्चजन्यं शङ्खञ्च

गृहीत्वाऽप्रतिहतगतिं पुष्यरथमारुरोह । रथे गरुडचिह्नाङ्किता पताका धूयतेस्म, अपरिमिता च चतुरङ्गिण्यश्चम्वो महत्यः पताकाः धुन्वन्त्यो भगवन्तं श्रीकृष्ण-मन्वगच्छन् । तमवलोकनार्थं जनसम्मर्दाः प्रतिरथ्यमाराद् जग्मुः । श्रीकृष्णस्य भगवतो राजधानी सुवर्णमयी द्वारकापुरी मध्ये समुद्रं सुवर्णप्राकारदीप्त्या दिशः पीताः कुर्वाणा जलं विदार्य वडवानलशिखेव दिदीपे । तदापणेषु पुञ्जीकृतानि बहुमूल्यानि रत्नान्यासन् । द्वारकापुर्या अट्टाः प्राकारादयश्चात्युच्चास्तथा चात्यन्तं श्लक्ष्णा आसन् । तत्राऽऽलेखितान्यालेख्यानि सचेतनानीव प्रतीयन्तेस्म । अप्सरोवत् सुन्दर्यस्तत्रत्या रमण्यो मानरहिता भूत्वा सदा कामोत्कण्ठिताः बभूवुः । एतादृशीं स्वर्गोपमां द्वारकापुरीमवलोकयन् भगवान् श्रीकृष्णो यदा ततो बहिर्व-गंतस्तदा समुद्रं ददर्श । तत्र मेघैरेव तोयं गृहीत्वा निष्पादिता अनेका नद्यः समुद्रं प्रविशन्तिस्म । भगवान् श्रीकृष्ण आलिङ्गितभूतलं तारस्वरेण क्रन्दितारं चञ्चला-द्बाहुसदृशमहत्कल्लोलं फेनायमानं नदीनां पतिं समुद्रमपस्माररोगिणमिव ददर्श । समुद्रतटस्य श्यामलाः मेघा अत्यन्तं मनोहरा आसन् । समुद्रतटे मुक्ताः विकीर्णा आसन् । तत्र शीतलेन मन्देन सुगन्धितेन च वायुना श्रीकृष्णस्य भगवतस्तस्य सैनिकानाञ्च श्रमो दूरीभवतिस्म । एतादृशे समुद्रतटे आश्रयं गृहीतवन्तः श्रीकृष्णसैनिकाः लवङ्गपुष्पमाल्यनिर्मितकर्णभूषणान् धारितवन्तः, नारिकेलान्तः-जलं पीत्वा सरसपूगफलानि च भक्षयामासुः ।

## चतुर्थसर्गस्य कथासारः

प्रश्नः १७—शिशुपालवधस्य चतुर्थसर्गस्य कथा सङ्क्षेपेण स्वसंस्कृते-लेख्या । ( १९८३ )

उत्तरम्—द्रष्टव्यं प्रश्नः त्रयोदशतमः ।

# श्लोक-व्याख्यात्मको भागः

## प्रथमः सर्गः

( १ ) प्रश्नः—

श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि ।
वसन्ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥ १ ॥

पद्यस्यास्य सप्रसङ्गछन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारोल्लेखपूर्वकं हिन्दीवाण्या व्याख्या कार्या ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च–पद्यमिदं महाकविमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य प्रथमसर्गादुद्धृतम् । अत्र पद्ये तत्रभवान् महाकविर्माघः "काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥" इत्यालङ्कारिकवचनप्रामाण्यात् काव्यस्यानेकश्रेयःसाधनतां, "काव्यालापांश्च वर्जयेत्" इति निषेधस्यासत्काव्यविषयतां च पश्यन् "शिशुपालवधा"ख्यमहाकाव्यप्रणयनोत्सुकश्चिकीर्षितार्थनिर्विघ्नपरिसमाप्तये "आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखम्" इत्याशीराद्यन्यतमस्य प्रबन्धमुखलक्षणसाधनत्वात् काव्यफलं शिशुपालवधबीजभूते भगवतः श्रीकृष्णस्य नारददर्शनरूपं वस्तु ग्रन्थादौ श्रीशब्दप्रयोगपूर्वकं निर्दिशन् कथामुपक्षिपति—श्रिय इति ।

अन्वयः—श्रियः पतिः जगन्निवासः जगत् शासितुं श्रीमति वसुदेवसद्मनि वसन् हरिः अम्बराद् अवतरन्तं हिरण्यगर्भाङ्गभुवं मुनिं ददर्श ।

व्याख्या—श्रयति हरिं यां सा श्रीः, तस्याः श्रियः=रुक्मिणीरूपिण्याः लक्ष्म्याः । ( "सम्पत्तिः श्रीश्च लक्ष्मीश्च कमला श्रीर्हरिप्रिया" इत्यमरः । ) ' श्रीर्वेशरचना शोभा" इत्यमरमेदिन्यौ ।) पतिः=भर्ता ("पतिर्भर्ता" इत्यमरः ।) "राघवत्वे भवेत् सीता रुक्मिणी कृष्णजन्मनि" इति विष्णुपुराणात् । अनेन रुक्मिणीस्वयंवरानन्तरकालमियं काव्यकथा प्रवृत्तेति सूचितम् । निवसन्ति जना अस्मिन्नसौ निवासः, जगतां निवासो जगन्निवासः=विश्वाधारभूतः । जगत्= भुवनम् । ("त्रिष्टपथो जगती लोको विष्टपं भुवनं जगत्" इत्यमरः ।) शासितुं= शासनं कर्तुम्, साधुपरित्राणदुर्जनविनाशाभ्यां व्यवस्थापयितुमित्यर्थः । श्रीर्विद्यते यस्मिन् तत् श्रीमत्, तस्मिन् श्रीमति=अत्यन्तशोभायमाने सर्वसमृद्धियुक्ते इत्यर्थः ।

वसुदेवस्य सद्म वसुदेवसद्म, तस्मिन् वसुदेवसद्मनि=वसुदेववेश्मनि, कश्यपाव
रस्य वसुदेवनामकस्य स्वपितुर्भवने इत्यर्थः। ("गृहं गेहोदवसितं वेश्म स
निकेतनम्" इत्यमरः। "वसुदेवोऽस्य जनकः" इत्यमरः।) वसन्=वासं कुर्व
हरिः=भगवान् श्रीकृष्णः। अम्बरात्=आकाशात् ("अम्बरमाकाशन्विहायसं
इत्यमरः)। अवतरन्तम्=आयान्तम्, देवेन्द्रसन्देशनिवेदनार्थमित्यर्थः। हिरण्य
गर्भः हिरण्यगर्भः, अङ्गाद् भवतीति अङ्गभूः, हिरण्यगर्भस्य अङ्गभूः हिर
गर्भाङ्गभूस्तं हिरण्यगर्भाङ्गभुवम्=ब्रह्मसुतम्, ब्रह्मणो मानसपुत्रम्। मुनिम्=ना
दाख्यं, ददर्श=अपश्यत्। अत्राल्पीयस्यापि वसुदेवसद्मनि, सकलजगदाश्रयत
महीयसो हरेराधेयत्वकथनादधिकनामकोऽलङ्कारः। तदुक्तं साहित्यदर्पणे-
"आश्रयाश्रयिणोरेकस्याधिक्येऽधिकमुच्यते" इति। किञ्च जगन्निवासस्या
वसुदेवसद्मरूपजगदेकदेशनिवासित्वमिति विरोधाभासालङ्कारः। अन्या
तकारसकारादेरेकधा (स्वरूपतः) असकृच्चावृत्त्या जगज्जगदिति वर्णसमुदाय
स्वरूपतः क्रमतश्च सकृदावृत्त्या वृत्त्यनुप्रासो शब्दालङ्कारौ। एषां चान्योऽन्य
नैरपेक्ष्येण तिलतण्डुलन्यायेनैकत्र समावेशात् संसृष्टिः। अत्र वंशस्थं वृत्तम्-
"जतौ तु वंशस्थमुदीरितं जरौ" इति लक्षणात्।

समासः—श्रयति हरिं या सा श्रीः, तस्याः श्रियः। श्रीर्विद्यते यस्मिन् त
श्रीमत्, तस्मिन् श्रीमति। निवसन्ति जना अस्मिन्नसौ निवासः, जगतां निवा
जगन्निवासः। वसुदेवस्य सद्म वसुदेवसद्म, तस्मिन् वसुदेवसद्मनि। हिरण्य
गर्भः हिरण्यगर्भः, अङ्गाद् भवतीति अङ्गभूः, हिरण्यगर्भस्याङ्गभूः हिरण
गर्भाङ्गभूः, तं हिरण्यगर्भाङ्गभुवम्।

भावार्थः—रुक्मिणीरूपिण्याः लक्ष्म्याः पतिः समेषां लोकानामाश्रयः, वि
साधुपरित्राणदुष्टविनाशाभ्यां नियन्तुं सर्वसमृद्धिशालिनि कश्यपावतारस
स्वपितुर्वसुदेवस्य गृहे भगवान् श्रीकृष्णः आकाशादवतरन्तं ब्रह्मणो मानसपु
देवर्षिनारदं ददर्श।

(२) प्रश्नः—

गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः।
पतत्यधो धाम विसारि सर्वतः किमेतदित्याकुलमीक्षितं जनैः॥

पद्यमिदं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारोल्लेखपूर्व
देववाण्या व्याख्यायताम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य शिशुपालवधमहाकाव्यस्य प्रथमसर्गादुद्धृतम्। अत्र कविराकाशादवतरतो नारदस्य मुनेर्द्वारिकावासिभिर्जनैर्विस्मयेनेक्षणप्रवर्त्तनं वर्णयति।

अन्वयः—अनूरुसारथेः गतं तिरश्चीनं ( प्रसिद्धम् ) हविर्भुजः ऊर्ध्वंज्वलनं प्रसिद्धम्। ( इदन्तु ) सर्वतः विसारि धाम अधः पतति। "एतत् किम्" इति जनैः आकुलम् ( यथा स्यात्तथा ) ईक्षितम्।

व्याख्या—अविद्यमानौ ऊरू यस्यासौ अनूरुः, अनूरुः सारथिर्यस्य सः अनूरुसारथिः, तस्य अनूरुसारथेः=दिवाकरस्य, सूर्यस्येत्यर्थः। ( "सूरसूतोऽरुणोऽनूरु, काश्यपिर्गरुडाग्रजः" इत्यमरः। ) गतं=गतिः। तिरश्चीनम्=तिर्यक्, पूर्वान्तात् पश्चिमान्तमित्यर्थः। ( प्रसिद्धम्=विख्यातम्। ) हविर्भुङ्क्ते इति हविर्भुक्, तस्य हविर्भुजः=वह्नेः, ऊर्ध्वञ्च तज्ज्वलनञ्च ऊर्ध्वंज्वलनम्=ऊर्ध्वंस्फुरणम्। प्रसिद्धम्=विख्यातम्। ( इदन्तु=पुरतो दृश्यमानम् ) सर्वतः=परितः ( "समन्ततस्तु परितः सर्वतो विश्वगित्यपि" इत्यमरः। ), विसारि=प्रसरणशीलम्, धाम=रश्मिः, तेज इत्यर्थः। ( "धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोः" इति हैमः। ) अधः=अधस्तात्, गगनाङ्गणाद् भुवस्तलम्, पतति=आयाति। एतत्=इदम्, पुरो दृश्यमानं धाम, किम्=किमात्मकम्। इति=एवं प्रकारेण। जनैः=द्वारिकावासिभिः सामान्यलोकैः। आकुलम्=विस्मयेन सम्भ्रान्तं यथा स्यात् तथा। ईक्षितम्=अवलोकितम्। अत्रोपमेयस्य मुनिधाम्नः सूर्याग्निभ्यामुपमानाभ्यामधो विसरणधर्मेणाधिक्यवर्णनाद् व्यतिरेकालङ्कारः। तल्लक्षणं यथा साहित्यदर्पणे—"आधिक्यमुपमेयस्योपमानान्न्यूनताथवा व्यतिरेकः" इति। वंशस्थं वृत्तम्।

समासः—अविद्यमानौ ऊरू यस्यासौ अनूरुः, अनूरुः सारथिर्यस्य स अनूरुसारथिः, तस्य अनूरुसारथेः। हविर्भुङ्क्ते इति हविर्भुक्, तस्य हविर्भुजः। ऊर्ध्वञ्च तज्ज्वलनञ्च ऊर्ध्वंज्वलनम्।

भावार्थः—सूर्यस्य गतिस्तु तिर्यग् भवति अग्नेश्चोर्ध्वस्फुरणं प्रसिद्धम्। परन्तु इदन्तु सर्वतः प्रसरणशीलं तेजोऽधः पतति। "किमिदम्"? इत्येवम्प्रकारेण द्वारिकावासिभिर्जनैर्व्याकुलतापूर्वकं दृष्टम्।

( ३ ) प्रश्नः—

चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम्।
विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः॥

पद्यमिदं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारोल्लेखपूर्वं
देववाण्या व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य
शिशुपालवधमहाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति । अत्र कविर्वर्णयति यदाकाशा
दवतरन्तं मुनिं नारदं भगवान् श्रीकृष्णः क्रमेण ज्ञातवानिति ।

अन्वयः—विभुः सः, पुरा त्विषां चयः इत्यवधारितम् । ततः विभा
विताकृतिं शरीरीति ( अवधारितम् ) । ( ततः ) विभक्तावयवं पुमानि
( अवधारितम् ) अमुं क्रमात् नारदः इत्यबोधि ।

व्याख्या—विभुः=व्यापकवस्तुतत्त्वनिर्धारणसमर्थः इत्यर्थः । ("विभुः प्र
व्यापके" इत्यनेकार्थसङ्ग्रहः ।) सः=भगवान् श्रीकृष्णः । पुरा=पूर्वम्, प्रथमद
इत्यर्थः । त्विषाम्=तेजसाम्, चयः=समूहः, ( "चयः समूहे" इति मेदिनी
इति=एवम् । अवधारितम्=विनिश्चितम्, तेजःपुञ्जमात्रत्वेन विनिश्चितमित्यर्थः
ततः=तदनन्तरम्, किञ्चित्सामीप्ये सतीत्यर्थः । विभाविता विमृष्ट
आकृतिर्यस्य स विभाविताकृतिस्तं विभाविताकृतिम्=विमृष्टाकृतिम्
( अत एव ) शरीरी=चेतनः प्राणी, ( "प्राणी तु चेतनो जन्मी जन्
जन्युशरीरिणः" इत्यमरः । ) इति=इत्थम् ( अवधारितम्=विनिश्चितम् )
( ततः=तदनन्तरम्, सामीप्याधिक्ये सतीत्यर्थः ) । विभक्ता विविच्य गृहीता
अवयवा मुखादयो यस्य स विभक्तावयवः, तं विभक्तावयवम्=पृथग्दृष्टमुखपूं
द्यङ्गम् (अत एव) पुमान्=पुरुषः, इति=इत्थम् (अवधारितम्=विनिश्चितम्) इति
अमुं=गगनादायान्तं व्यक्तिविशेषम् । क्रमात्=पूर्वोक्तरीत्या सामान्यविशे
ज्ञानक्रमेण । इति=एवम् । अबोधि=नारदं बुद्धवानित्यर्थः । अत्र विभावित
कृतिं विभक्तावयवमित्यादिना आकृतिविभावनावयवविभावनपदार्थौ विशेष
वृत्त्या शरीरत्वपुंस्त्वनिर्धारणे हेतुत्वेनोपन्यस्ताविति हेतोरत्र पदार्थहेतुकं काव्य
लिङ्गमलङ्कारः । वंशस्थं वृत्तम् ।

समासः—विभाविता आकृतिर्यस्य स विभाविताकृतिस्तं विभाविताकृतिम्
विभक्ता अवयवा यस्य स विभक्तावयवस्तं विभक्तावयवम् ।

भावार्थः—वस्तुस्वरूपनिर्धारणसमर्थो भगवान् श्रीकृष्णः आकाशादायान्तं
पुरुषविशेषं सर्वप्रथमं तेजःपुञ्जमिति विनिश्चितवान्, ततः किञ्चित्सामीप्ये स
विभक्तहस्तपादाद्यवयवं तं कश्चित् प्राणीति निश्चितवान्, ततश्च सामीप्याधि

मुखाद्यवयवदर्शने पुरुष इति निश्चितवान्, क्रमेणानेनान्ते च तं नारदोऽयमिति ज्ञातवान् ।

( ४ ) प्रश्नः—

नवानधोऽधो बृहतः पयोधरान् समूढकर्पूरपरागपाण्डुरम् ।
क्षणं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना स्फुटोपमं भूतिसितेन शम्भुना ॥

पद्यमिदं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा विवृणुत ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य शिशुपालवधमहाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति । अत्र कविरम्बरादायान्तं नारदं प्रवर्णयन् तस्य शिवौपम्यं प्रतिपादयति ।

अन्वयः—नवान् बृहतः पयोधरान् अधोऽधः ( स्थितम् ) समूढकर्पूरपरागपाण्डुरं क्षणं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना भूतिसितेन शम्भुना स्फुटोपमम् अमुं सः क्रमात् नारद इत्यबोधि इति पूर्वेणान्वयः ) ।

व्याख्या—नवान्=नूतनान्, सद्यःसम्भृतसलिलान्, अतिनीलानित्यर्थः । बृहतः=विपुलान् । धरन्तीति धराः, पयसां धराः पयोधरास्तान् पयोधरान्=मेघान् ("पयोधरः कुचे मेघे" इत्यनेकार्थसङ्ग्रहः ।) अधोऽधः=मेघानां समीपाधः-( )देशे । स्थितमिति शेषः । कर्पूरस्य परागः कर्पूरपरागः, समूढश्चासौ कर्पूरपरागः समूढकर्पूरपरागः, समूढकर्पूरपराग इव पाण्डुरः समूढकर्पूरपरागपाण्डुरस्तं समूढकर्पूरपरागपाण्डुरम्=पुञ्जितकर्पूरचूर्णतुल्यधवलम् । ( "समूढः पुञ्जिते भुग्ने" इति विश्वः । ) ( अत एव ) क्षणं=क्षणमात्रम्, मेघसमीपावस्थानक्षणे इत्यर्थः । ( 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इत्यमरः ।) गजानामिन्द्रो गजेन्द्रः, गजेन्द्रस्य कृत्तिः गजेन्द्रकृत्तिः, क्षणे उत्क्षिप्ता गजेन्द्रकृत्तिर्येन सः, तेन क्षणोत्क्षिप्तगजेन्द्रकृत्तिना=ताण्डवोत्सवावसरोपरिधारितगजेन्द्रचर्मणा । ( "अजिनं चर्म कृत्तिः स्त्री" इत्यमरः ।) भूत्या सितो भूतिसितः, तेन भूतिसितेन=भस्मगौरेण । ( "भूतिर्भस्मनि सम्पदि" इत्यमरः । ) शम्भुना=शिवेन । स्फुटा उपमा यस्य तं स्फुटोपमस्तं स्फुटोपमम्=व्यक्तसादृश्यम् । अत्र "क्रमादमुं नारद इत्यबोधि सः" इति पूर्वेणान्वयः । अत्रोपमालङ्कारः । वंशस्थं वृत्तम् ।

समासः—धरन्तीति धराः, पयसां धराः पयोधरास्तान् पयोधरान् । कर्पूरस्य परागः कर्पूरपरागः, समूढश्चासौ कर्पूरपरागः समूढकर्पूरपरागः, समूढकर्पूरपराग इव पाण्डुरः समूढकर्पूरपरागपाण्डुरस्तं समूढकर्पूरपरागपाण्डुरम् । गजाना-

मिन्द्रो गजेन्द्रः, गजेन्द्रस्य कृत्तिः गजेन्द्रकृत्तिः, क्षणे उत्क्षिप्ता गजेन्द्रकृत्तिर्येन क्षणोत्क्षिप्तगजेन्द्रकृत्तिस्तेन क्षणोत्क्षिप्तगजेन्द्रकृत्तिना । स्फुटा उपमा यस्य स्फुटोपमस्तं स्फुटोपमम् । भूत्या सितो भूतिसितः, तेन भूतिसितेन ।

भावार्थः—नवीनान् जलपूर्णत्वादतिनीलान् विपुलान् मेघान् अधो स्थितम् एकस्थीकृतकर्पूरचूर्णवद् धवलम्, अत एव मेघसमीपावस्थानक्षणे ता वावसरे स्वशरीरे परिधारितगजेन्द्रचर्मणा भस्मलेपनाद् गौरवर्णेन शिवेन स प्रतीयमानं तं पुरुषविशेषं भगवान् श्रीकृष्णो "नारद" इत्यवोधि ।

( ५ ) प्रश्नः—

दधानमम्भोरुहकेसरद्युतीर्जटाः शरच्चन्द्रमरीचिरोचिषम् ।
विपाकपिङ्गास्तुहिनस्थलीरुहो धराधरेन्द्रं व्रततीततीरिव ।।

पद्यमिदं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं देवव व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीत शिशुपालवधमहाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति । अत्र कविराकाशादवत नारदस्य हिमालयसादृश्यं वर्णयति ।

अन्वयः—अम्भोरुहकेसरद्युतीः जटाः दधानं शरच्चन्द्रमरीचिरो ( अत एव ) विपाकपिङ्गाः तुहिनस्थलीरुहः व्रततीततीः (दधानं) धराध मिव ( स्थितम् ) "अमुं नारद इत्यवोधि सः" ।

व्याख्या—अम्भसि रोहन्तीति अम्भोरुहाणि, तेषां केसराणि, तेषां द्युति द्युतिर्यासां ताः अम्भोरुहकेसरद्युतयः, ताः अम्भोरुहकेसरद्युतीः=पद्मकिञ्ज पिशङ्गीः, कमलकेसरसदृशपीतवर्णा इत्यर्थः । ( "किञ्जल्कः केसरोऽस्त्रिया" इत्यमरः । "स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः" इत्यमरः । ) ज सटाः, ( 'जटाः सटाः" इत्यमरः । ) दधानम्=धारयन्तम् । शरदः शरच्चन्द्रः, शरच्चन्द्रस्य मरीचय इव रोचिर्यस्य सः, तं शरच्चन्द्रमरीचिरो =शरत्सुधांशुरश्मिधवलम् । अत एव विपाकेन पिङ्गाः विपाकपिङ्गाः, विपाकपिङ्गाः=परिणामपिङ्गलाः । तुहिनस्य तुहिनप्रधाना वा स्थ तुहिनस्थली, तुहिनस्थल्यां=तुषारभूमौ, रोहन्तीति तुहिनस्थलीरुहः, तुहिनस्थलीरुहः=तुषारभूमिसमुत्पन्नाः । व्रततीततीः=लताव्यूहान् ( "व तु व्रतती लता" इत्यमरः । ) ( दधानम्=धारयन्तम् ) । धरन्तीति धरायाः धराः धराधराः, तेषामिन्द्रः धराधरेन्द्रस्तं धराधरेन्द्रम्=पर्व

हिमवन्तम् । इव=यथा "अमुं नारद इत्यबोधि सः" इति पूर्वेणान्वयः । धरा-धरेन्द्रमिव इति इवशब्दप्रयोगादत्र वाच्योत्प्रेक्षालङ्कारः । वंशस्थं वृत्तम् ।

समासः—अम्भसि रोहन्तीति अम्भोरुहाणि, तेषां केसराणि, तेषां द्युतिरिव द्युतिर्यासां ताः अम्भोरुहकेसरद्युतयः, ताः अम्भोरुहकेसरद्युतीः । शरदः चन्द्रः शरच्चन्द्रः, शरच्चन्द्रस्य मरीचय इव रोचिर्यस्य सः, तं शरच्चन्द्रमरीचि-रोचिषम् । विपाकेन पिङ्गाः विपाकपिङ्गाः, ताः विपाकपिङ्गाः । तुहिनस्य तुहिनप्रधाना वा स्थली तुहिनस्थली, तस्यां रोहन्तीति तुहिनस्थलीरुहः, ताः तुहिनस्थलीरुहः । धरन्तीति धराः, धरायाः धराः धराधराः, तेषामिन्द्रस्तं धराधरेन्द्रम् ।

भावार्थः—कमलकेसरवत् पीतवर्णाः जटाः धारयन्तं, शरत्कालीनसुधांशु-कान्तिवद् धवलम्, अत एव परिपाकपिङ्गलाः, तुषारभूमिसमुत्पन्ना लताः धारयन्तं पर्वतराजं हिमालयमिव प्रतीयमानं तं पुरुषविशेषं भगवान् श्रीकृष्णो "नारद" इत्यबोधि ।

( ६ ) प्रश्नः—

पिशङ्गमौञ्जीयुजमर्जुनच्छविं वसानमेणाजिनमञ्जनद्युति ।
सुवर्णसूत्राकलिताधराम्बरां विडम्बयन्तं शितिवाससस्तनुम् ॥

पद्यमिदं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारोल्लेखपूर्वकं संस्कृतवाण्या व्याख्यायताम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य शिशुपालवधमहाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति । अत्र कविराकाशादवतरतो नारदस्य बलभद्रेण सहौपम्यं प्रदर्शयति ।

अन्वयः—'पिशङ्गमौञ्जीयुजम् अर्जुनच्छविम् अञ्जनद्युतिम् एणाजिनं वसानम् (अत एव) सुवर्णसूत्राकलिताधराम्बरां शितिवाससः तनुं विडम्बयन्तम् (अमुं सः नारद इत्यबोधि ) ।

व्याख्या—मुञ्जस्य विकारो मौञ्जी, पिशङ्गी चासौ मौञ्जी पिशङ्ग-मौञ्जी, तया युज्यते इति पिशङ्गमौञ्जीयुक्, तं पिशङ्गमौञ्जीयुजम्=पीतलवर्णमुञ्जनिर्मितमेखलाधारिणम् । ( "कडारः कपिलः पिङ्गपिशङ्गौ कद्रु, पिङ्गलौ" इत्यमरः । ) ( पुनश्च स्वयं ) अर्जुना छविर्यस्य सः अर्जुनच्छ-विस्तम् अर्जुनच्छविम्=धवलकान्ति गौरवर्णमित्यर्थः । अञ्जनस्य द्युतिरिव द्युतिर्यस्य तत् अञ्जनद्युत्यञ्जनवर्णं, कृष्णवर्णमित्यर्थः । एणस्य अजिनम् एणाजिनं, तत् एणाजिनम्=कृष्णमृगचर्म ।("अजिनं चर्म कृत्तिः स्त्री" इत्यमरः ।)

वसानम्=आच्छादयन्तम्। (अत एव) सुवर्णस्य सूत्रं सुवर्णसूत्रम्, सुवर्णसू हिरण्यमेखलया आकलितं बद्धमधराम्बरमम्बरीयकं यस्याः सा, तां सुवर्णसू कलिताधराम्बराम्=हिरण्यमेखलाबद्धनीलधौतवस्त्रम्। शिति वासो यस्य शितिवासाः, तस्य शितिवाससः=रौहिणेयस्य, बलभद्रस्येत्यर्थः। ("नीलाम्ब रौहिणेयस्तालाङ्को मुसली हली" इत्यमरः।) तनुं=वपुः। ("गात्रं संहननं शरीरं वर्ष्म विग्रहः। कायो देहः क्लीबपुंसो स्त्रियां मूर्तिस्तनुस्त इत्यमरः।) विडम्बयतीति विडम्बयन्, तं विडम्बयन्तम्=अनुकुर्वाणमित्य अमुं स नारद इत्यबोधि इति पूर्वेणान्वयः। अत्र "विडम्बयन्तम्" इत नारदस्य बलरामौपम्यमर्थप्रतीतेरनन्तरमेव गम्यते इत्यार्थीयमुपमा। वं वृत्तम्।

समासः—मुञ्जस्य विकारो मौञ्जी, पिशङ्गी चासौ मौञ्जी पि मौञ्जी, तया युज्यते इति पिशङ्गमौञ्जीयुक्, तं पिशङ्गमौञ्जीयुजम्। अ छविर्यस्य सः अर्जुनच्छविः, तम् अर्जुनच्छविम्। एणस्य अजिनम् एणाजिनं, एणाजिनम्। अञ्जनस्य द्युतिरिव द्युतिर्यस्य तत् अञ्जनद्युति। सुवर्णस्य सुवर्णसूत्रम्, सुवर्णसूत्रेण आकलितम् अधराम्बरं यस्याः सा सुवर्णसूत्राक धराम्बरा, तां सुवर्णसूत्राकलिताधराम्बराम्। शितिवासः यस्य सः शितिवा तस्य शितिवाससः। विडम्बयतीति विडम्बयन्, तं विडम्बयन्तम्।

भावार्थः—पीतवर्णमुञ्जनिर्मितमेखलाधारिणं पुनश्च स्वयं शुभ्रवर्णं वर्णं मृगचर्म परिदधानं, सुवर्णमेखलाबद्धनीलधौतवस्त्रधारिणं, शुभ्रवर्णं बल देहमिव प्रतीयमानं तं पुरुषविशेषं भगवान् श्रीकृष्णो "नारद" इत्यबोधि।

(७) प्रश्नः—

विहङ्गराजाङ्गरुहैरिवायतैर्हिरण्मयोर्वीरुहवल्लितन्तुभिः।
कृतोपवीतं हिमशुभ्रमुच्चकैर्घनं घनान्ते तडिताङ्गणैरिव॥

पद्यमिदं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कार पूर्वकं सुरगिरा व्याख्येयम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्र "शिशुपालवधमहाकाव्यस्य" प्रथमसर्गादुद्धृतमस्ति। अत्र कविराकाशाद नारदस्य शरन्मेघसादृश्यं वर्णयति।

अन्वयः—विहङ्गराजाङ्गरुहैः इव आयतैः हिरण्मयोर्वीरुहवल्लित कृतोपवीतं हिमशुभ्रं घनान्ते तडिताङ्गणैः (उपलक्षितम्) उच्चकैः, घ "स्थितम्" (क्रमादमुं नारद इत्यबोधि सः इति पूर्वेणान्वयः)।

व्याख्या—विहायसा गच्छन्तीति विहङ्गाः, तेषां राजा विहङ्गराजस्तस्य अङ्गरुहाः विहङ्गराजाङ्गरुहास्तैः विहङ्गराजाङ्गरुहैः=गरुडलोमभिः। इव=यथा। आयतैः=दीर्घैः। हिरण्यस्य विकारः हिरण्मयी, हिरण्मयी चासौ उर्वी च हिरण्मयोर्वी, तस्यां रोहन्तीति हिरण्मयोर्वीरुहाः, ताश्च ताः वल्लयः हिरण्मयोर्वीरुहवल्लयः, तासां तन्तवः हिरण्मयोर्वीरुहवल्लितन्तवस्तैः हिरण्मयोर्वीरुहवल्लितन्तुभिः=हैमभूमिसमुत्पन्नलतासूत्रैः। कृतम् उपवीतं येन सः कृतोपवीतस्तं कृतोपवीतम्=कल्पितयज्ञसूत्रम्। (स्वयञ्च) हिममिव शुभ्रः हिमशुभ्रस्तं हिमशुभ्रम्=तुषारधवलम्। (अतएव) घनानाम् अन्तः घनान्तस्तस्मिन् घनान्ते = शरदृतौ। तडितां = विद्युताम्। गणैः = समूहैः। (उपलक्षितम्) उच्चकैः=उन्नतम्। घनं=मेघम्। इव=यथा। (स्थितम्=शोभायमानम्) अमुं सः नारद इत्यवोधि इति पूर्वेणान्वयः। अत्र वाच्योत्प्रेक्षालङ्कारः, वंशस्थं वृत्तम्।

समासः—विहायसा गच्छन्तीति विहङ्गाः, तेषां राजा विहङ्गराजः, तस्य अङ्गरुहाः विहङ्गराजाङ्गरुहाः, तैः विहङ्गराजाङ्गरुहैः। हिरण्यस्य विकारः हिरण्मयी, हिरण्मयी चासौ उर्वी च हिरण्मयोर्वी, तस्यां रोहन्तीति हिरण्मयोर्वीरुहाः, ताश्च ताः वल्लयः हिरण्मयोर्वीरुहवल्लयः, तासां तन्तवस्तैः हिरण्मयोर्वीरुहवल्लितन्तुभिः। कृतम् उपवीतं येन सः कृतोपवीतस्तं कृतोपवीतम्। हिममिव शुभ्रः हिमशुभ्रः, तं हिमशुभ्रम्। घनानाम् अन्तः घनान्तस्तस्मिन् घनान्ते।

भावार्थः—पक्षिराजगरुडकेशवद् दीर्घैः, सुवर्णमयभूमिसमुत्पन्नलतासूत्रैर्निर्मितं यज्ञोपवीतं परिदधानं हिमवदतिशुभ्रवर्णम्, अतएव शरत्काले विद्युतां समूहैर्युवतं, शुभ्रवर्णमेघवत् शोभायमानं तं पुरुषविशेषं भगवान् श्रीकृष्णो "नारद" इत्यवोधि।

(८) प्रश्नः—

निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा लसद्बिसच्छेदसिताङ्गसङ्गिना।
चकासतं चारुचमूरुचर्मणा कुथेन नागेन्द्रमिवेन्द्रवाहनम्॥

पद्यस्यास्य छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सप्रसङ्गं व्याख्या विधेया।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य शिशुपालवधमहाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति। अत्र कविना आकाशादवतरतो मुनेर्नारदस्यैरावतसाम्यमुत्प्रेक्ष्यते।

अन्वयः—निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा लसद्बिसच्छेदसिताङ्गसङ्गि चारुचमूरुचर्मणा कुथेन इन्द्रवाहनं नागेन्द्रम् इव चकासतम् ( अमुं स ना इत्यबोधि ।

व्याख्या—चित्राणि चोज्ज्वलानि च सूक्ष्माणि चेति चित्रोज्ज्वलसूक्ष्मा निसर्गेण चित्रोज्ज्वलसूक्ष्माणि पक्ष्माणि यस्य तत् निसर्गचित्रोज्ज्वलसूक्ष्मप तेन निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा=स्वभावतः शबलवर्णभास्वराणुलोम्न लसंश्चासौ बिसच्छेदश्च लसद्बिसच्छेदः, स इव सितं लसद्बिसच्छेदसि तच्च तदङ्गञ्च लसद्बिसच्छेदसिताङ्गम्, तस्मिन् सङ्गोऽस्यास्तीति लसद्बि च्छेदसिताङ्गसङ्गी, तेन लसद्बिसच्छेदसिताङ्गसङ्गिना=शोभमानमृणाल वद्धवलाङ्गसक्तेन । ("मृणालं बिसम्" इत्यमरः । "छेदः खण्डोऽस्त्रियाम्" त्रिकाण्डशेषः ।) चमूरोः चर्म चमूरुचर्म, चारु च तत् चमूरुचर्म चारुचमू तेन चारुचमूरुचर्मणा=मनोहरमृगत्वचा । कुथेन=पृष्ठास्तरणेन । ( "प्रवे स्तरणं वर्णः परिस्तोमः कुथो द्वयोः" इत्यमरः । ) इन्द्रस्य वाहनं तत् इन्द्रवा नम्=देवेन्द्रयानम् । नागानाम् इन्द्रो नागेन्द्रस्तं नागेन्द्रम्=गजराजमैरावत चकासतम्=शोभमानम् ( अमुं स नारद इत्यबोधि इति पूर्वेणान्वयः । ) वाच्योत्प्रेक्षालङ्कारः । वंशस्थं वृत्तम् ।

समासः–चित्राणि च उज्ज्वलानि च सूक्ष्माणि चेति चित्रोज्ज्वलसूक्ष्मा निसर्गेण चित्रोज्ज्वलसूक्ष्माणि पक्ष्माणि यस्य तत् निसर्गचित्रोज्ज्वलसूक्ष्मप तेन निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा । लसंश्चासौ बिसच्छेदश्च लसद्बिसच्छेदः इव सितं लसद्बिसच्छेदसितम्, तच्च तदङ्गञ्च लसद्बिसच्छेदसिताङ्ग तस्मिन् सङ्गोऽस्यास्तीति लसद्बिसच्छेदसिताङ्गसङ्गी, तेन लसद्बिस सिताङ्गसङ्गिना । चमूरोः चर्म चमूरुचर्म, चारु च तत् चमूरुचर्म चारु चर्म, तेन चारुचमूरुचर्मणा । इन्द्रस्य वाहनम् इन्द्रवाहनं, तत् इन्द्रवाह नागानाम् इन्द्रो नागेन्द्रस्तं नागेन्द्रम् ।

भावार्थः—स्वाभाविकविविधवर्णभाराणुलोम्ना, शोभायमानमृणालख शुभ्रवर्णं, स्वशरीरे धारितेन सुन्दरमृगचर्मणा ( अनेकवर्णचित्रितस्य सूक्ष्म युक्तस्य शुभ्रवर्णस्य चैरावतस्य देहे आच्छादितेन ) पृष्ठान्तरणेन देवेन्द्रवा गजराजमैरावतमिव शोभमानं तं पुरुषविशेषं भगवान् श्रीकृष्णो "ना इत्यबोधि ।

( ९ ) प्रश्नः—

अजस्रमास्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया ।
पुरः प्रवालैरिव पूरितार्धया विभान्तमच्छस्फटिकाक्षमालया ॥

पद्यमिदं सप्रसङ्गं देववाण्या व्याख्यायताम् । ( १९८० )

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य शिशुपालवधमहाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति । अत्र कविः आकाशादवतरन्तं मुनिं नारदं वर्णयति ।

अन्वयः—अजस्रम् आस्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया पुरः प्रवालैः पूरितार्धया इव अच्छस्फटिकाक्षमालया विभान्तम् ( अमुं स नारद इत्यबोधि ) ।

व्याख्या—अजस्रम्=सततम् ( "सततानारताश्रान्तसन्तताविरतानिशम्" इत्यमरः । अङ्गुष्ठस्य नखः अङ्गुष्ठनखः, तस्य अंशवः अङ्गुष्ठनखांशवः, वल्लक्याः गुणो वल्लकीगुणः, आस्फालिताश्च ते वल्लकीगुणाश्च आस्फालितवल्लकीगुणाः, तेषां क्षतेन उज्ज्वलाश्च ते अङ्गुष्ठनखांशवश्चेति आस्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशवः, तैर्भिन्ना आस्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्ना, तया आस्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया=ताडितवीणातन्त्रीसङ्घर्षणोज्ज्वलाङ्गुष्ठनखरश्मिमिश्रया । ("किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः" इत्यमरः । ) पुरः=पुरोभागे । प्रवालैः=विद्रुमैः । ("अथ विद्रुमः पुंसि प्रवालं पुंनपुंसकम्" इत्यमरः । ) पूरितमर्धं यस्याः सा पूरितार्धा, तया पूरितार्धया=प्रवेशितार्धभागया । इव=यथा । ( विभाव्यमानया ) अच्छाश्च ते स्फटिकाश्च अच्छस्फटिकाः, तेषाम् अक्षमाला अच्छस्फटिकाक्षमाला, तया अच्छस्फटिकाक्षमालया=स्वच्छस्फटिकानां मालया जपमालयेत्यर्थः । ("अच्छो भल्लूके स्फटिकेऽमलेऽभिमुखेऽव्ययम्" इति हैमः । ) विभान्तम्=शोभमानम् । ( अमुं स "नारद" इत्यबोधि इति पूर्वेणान्वयः ) । अत्र "नखांशुभिन्नया" इति स्वगुणत्यागेनान्यगुणस्वीकारात्तद्गुणनामकोऽलङ्कारः, "तद्गुणः स्वगुणत्यागादत्युत्कृष्टगुणग्रहः" इति साहित्यदर्पणोक्तलक्षणात् । वंशस्थं वृत्तम् ।

समासः—अङ्गुष्ठस्य नखः अङ्गुष्ठनखः, तस्य अंशवः अङ्गुष्ठनखांशवः, वल्लक्याः गुणाः वल्लकीगुणाः, आस्फालिताश्च ते वल्लकीगुणाश्च आस्फालितवल्लकीगुणाः, तेषां क्षतेन उज्ज्वलाश्च ते अङ्गुष्ठनखांशवश्च आस्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशवः, तैर्भिन्ना आस्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्ना, तया आस्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया ।

पूरितम् अर्धं यस्याः सा पूरितार्धा, तया पूरितार्धया । अच्छाश्च ते स्फटि
अच्छस्फटिकाः, तेषाम् अक्षमाला अच्छस्फटिकाक्षमाला, तया अच्छस्फटि
मालया ।

भावार्थः—निरन्तरताडितवीणातन्त्रीसङ्घर्षणोज्ज्वलाङ्गुष्ठनखकिरणम
अत एव पुरोभागे विद्रुमैः प्रवेशितार्धभागयेव विभाव्यमानया स्वच्छस्फ
मणिनिर्मितजपमालया शोभमानं तं पुरुषविशेषं भगवान् श्रीकृष्णो "ना
इत्यबोधि ।

( १० ) प्रश्नः—

रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः ।
स्फुटीभवद्ग्राममविशेषमूर्च्छनामवेक्षमाणं महतीं मुहुर्मुहुः ॥

पद्यमिदं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारोल्लेखपूर्वकं देव
व्याख्येयम् । ( १९७८ )

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणी
शिशुपालवधमहाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति । अत्र कविराकाशादव
मुनिं नारदं विशिनष्टि ।

अन्वयः—नभस्वतः आघट्टनया पृथग् रणद्भिः विभिन्नश्रुतिमण्डलैः स
स्फुटीभवद्ग्रामविशेषमूर्च्छनां महतीं मुहुर्मुहुः अवेक्षमाणम् ( अमुं सः
इत्यबोधि ) ।

व्याख्या—नभस्वतः=प्रभञ्जनस्य, वायोरित्यर्थः । ("नभस्वद्वातपव
प्रभञ्जनाः" इत्यमरः ।) आघट्टनया=आघातेन । पृथक्=असङ्कीर्णम्, रणद्भि
ध्वनद्भिः । श्रुतीनां मण्डलानि श्रुतिमण्डलानि, विभिन्नानि श्रुतिमण्डलानि
तैः विभिन्नश्रुतिमण्डलैः=प्रतिनियतसंख्यया; व्यवस्थितस्वरारम्भकशब्दवि
समूहैः । स्वरैः=षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादनामकैः "स-रे-
प-ध-नि" इत्येवं लोके प्रसिद्धैः सप्तभिः स्वरैः । स्फुटीभवन्त्यः ग्रामविशे
मूर्च्छनाः यस्यां सा स्फुटीभवद्ग्रामविशेषमूर्च्छना, तां स्फुटीभवद्ग्रामविशे
नाम्=व्यक्तीभवत्स्वरसङ्घातारोहावरोहक्रमभेदाम् । महतीम्="महती" स
निजवीणाम् । ("विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती । महती नारद
सरस्वत्यास्तु कच्छपी" इति वैजयन्तीकोषः । ) मुहुर्मुहुः=पुनः पुनः,
अवेक्षमाणम्=पश्यन्तम् । ( अमुं स नारद इत्यबोधि इति पूर्वेणान्वयः )
वादनं विनैव स्वराद्याविर्भावोक्त्या कोऽपि लोकातिक्रान्तोऽयं शिल्पसौष्ठवा
द्योत्यते तेन सह स्वतः प्रसिद्धस्यातिशयस्याभेदेनाध्यवसितत्वादतिश

ङ्कारः। तया चाङ्गुलिसंयोगरूपकारणं विनैव मूर्च्छनादिकार्योत्पत्तिद्योतनाद् भावनाऽलङ्कारो व्यज्यते, इत्यलङ्कारेणालङ्कारध्वनिः। वंशस्थं वृत्तम्।

समासः—श्रुतीनां मण्डलानि श्रुतिमण्डलानि, विभिन्नानि श्रुतिमण्डलानि यैः ते विभिन्नश्रुतिमण्डलास्तैः विभिन्नश्रुतिमण्डलैः। स्फुटीभवत्यः ग्रामविशेषाणां मूर्च्छनाः यस्यां सा, तां स्फुटीभवद्ग्रामविशेषमूर्च्छना।

भावार्थः—वायोराघातेन स्पष्टं शब्दायमानैर्व्यवस्थितस्वरसमूहंयुक्तैः भिः स्वरैः, यत्र स्वरसङ्घातरूपषड्जर्षभगान्धारमध्यमादित्रिग्रामस्वराणामारोहावरोहस्य क्रमः स्पष्टं प्रतीयतेस्म, तां "महतीं" नाम्नीं स्ववीणां पुनः पश्यन्तं तं पुरुषविशेषं भगवान् श्रीकृष्णो "नारद" इत्यवोधि।

( ११ ) प्रश्नः—

निवर्त्य सोऽनुव्रजतः कृतानतीनतीन्द्रियज्ञाननिधिर्नभःसदः।
समासदत् सादितदैत्यसम्पदः पदं महेन्द्रालयचारु चक्रिणः॥

पद्यमिदं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं व्याख्येयम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य शिशुपालवधमहाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति। अत्र कविः देवर्षेर्नारदस्य कृष्णप्राप्तिं वर्णयति।

अन्वयः—अतीन्द्रियज्ञाननिधिः सकृतानतीन् अनुव्रजतः नभःसदः निवर्त्य, सादितदैत्यसम्पदः चक्रिणः पद्मं महेन्द्रालयचारु समासदत्।

व्याख्या—इन्द्रियमतिक्रान्ताः ( पदार्थाः ) अतीन्द्रियाः, तेषां ज्ञानं अतीन्द्रियज्ञानं, तस्य निधिः अतीन्द्रियज्ञाननिधिः=इन्द्रियागोचरसर्वार्थद्रष्टा। सः=देवर्षिनारदः। कृता आनतयो यैस्ते कृतानतयस्तान् कृतानतीन्=कृतप्रणामान्। अनुव्रजतः=अनुगच्छतः। नभस्याकाशे सीदन्ति गच्छन्तीति तान् नभःसदः=देवान्। निवर्त्य=परावर्त्य। दैत्यानां सम्पदः दैत्यसम्पदः, सादिता सम्पदो येनासौ सादितदैत्यसम्पत्, तस्य सादितदैत्यसम्पदः=विध्वस्तीकृतदैत्यैश्वर्यस्य। ( "असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः" इत्यमरः। ) चक्रिणः=सुदर्शनचक्रधरस्य श्रीकृष्णस्य। ( "चक्री कोके कुलालेऽही वैकुण्ठे चक्रवर्तिनी" इति हैम। ) महेन्द्रस्य आलयः महेन्द्रालयः, स इव चारु तत् तथाभूतं महेन्द्रालयचारु= इन्द्रभवनमिव भासमानं, पदं=स्थानं, वासभवनमित्यर्थः। ( "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः। ) समासदत्=प्रापत्, समास-

साद। अत्र "नती नती" "पदः पदम्" इति च द्वयोर्व्यञ्जनयुग्मयोरसकृ छेकानुप्रासः, तथा पूर्वार्द्धे नकारस्य उत्तरार्द्धे सकारस्य दकारस्य चासकृ वृत्त्यनुप्रासः; अनयोर्नैरपेक्ष्येणावस्थानात् तिलतण्डुलन्यायेन संसृष्टिरल तदुक्तं साहित्यदर्पणे—"मिथोऽनपेक्षयैतेषां स्थितः संसृष्टिरुच्यते" वंशस्थं वृत्तम्।

समासः—इन्द्रियमतिक्रान्ताः ( पदार्थाः ) अतीन्द्रियाः, तेषां ज्ञान न्द्रियज्ञानं, तस्य निधिः अतीन्द्रियज्ञाननिधिः। कृता आनतयो यैस्ते कृ स्तान् कृतानतीन्। नभसि सीदन्ति ( गच्छन्ति ) ये तान् नभःसदः। सम्पदः दैत्यसम्पदः, सादिता दैत्यसम्पदो येनासौ सादितदैत्यसम्प सादितदैत्यसम्पदः। महेन्द्रस्य आलयः महेन्द्रालयः, स इव चारु तत् महेन्द्रालयचारु।

भावार्थः—इन्द्रियागोचरज्ञाननिधिः, देवर्षिर्नारदः पृष्ठतः समागच्छ कृतप्रणामान् परावर्त्य दैत्यारेश्चक्रधारिणो भगवतः श्रीकृष्णस्य स्वर्ग "द्वारकापुरी" नामानं वासभवनं समाससाद।

( १२ ) प्रश्नः—

पतत्पतङ्गप्रतिमस्तपोनिधिः पुरोऽस्य यावन्न भुवि व्यलीयत।
गिरेस्तडित्वानिव तावदुच्चकैर्जवेन पीठादुदतिष्ठदच्युतः॥

पद्यमिदं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कार व्याख्यायताम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघ शिशुपालवधमहाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति। अत्र कविः द्वारकापु नारदस्याऽगमनानन्तरं भगवता श्रीकृष्णेन विहितं स्वागतं वर्णयति।

अन्वयः—पतत्पतङ्गप्रतिमः तपोनिधिः अस्य पुरः भुवि यावत् न तावत् अच्युतः गिरेः तडित्वान् इव उच्चकैः पीठात् जवेन उदतिष्ठत्।

व्याख्या—पतंश्चासौ पतङ्गश्चेति पतत्पतङ्गः, सः प्रतिमा यस्य पतङ्गप्रतिमः=पतद्दिवाकरसदृशः, "पतन्" इति पाठे मुनिविशेषणमिदं आकाशादवतरन् इत्यर्थः। ( "पतङ्गौ पक्षिसूर्यौ च" इत्यमरः ) तपसां तपोनिधिः=मुनिर्नारदः। अस्य=भगवतः श्रीकृष्णस्य। पुरः=अग्रे पृथिव्याम्। यावत्=यावत्कालपर्यन्तम्। न व्यलीयत=नातिष्ठत्, तावत्=तावदेव, मुनिचरणयोर्भूस्पर्शात् प्रागेवेत्यर्थः। अच्युतः

ष्णः, गिरेः=पर्वतात्, तडितो=विद्युतोऽस्य सन्तीति तडित्वान्=वारिदः, इत्यर्थः। ("धाराधरो जलधरस्तडित्वान् वारिदोऽम्बुभृत्" इत्यमरः) यथा, उच्चकैः=समुन्नतात्। पीठात्=आसनात् ("पीठमासनम्" इत्यमरः)। =वेगेन। उदतिष्ठत्=समुत्तस्थौ। "पतत्पतङ्ग" इत्यत्र पतङ्गस्य सम्भवादियमभूतोपमेति दण्डी। आधुनिकास्तु अप्रसिद्धस्योपमानत्वायोगा-त्याहुः। वंशस्थं वृत्तम्।

समासः—पतंश्चासौ पतङ्गश्चेति पतत्पतङ्गः, स प्रतिमा यस्य सः पत-ङ्गप्रतिमः। तपसां निधिः तपोनिधिः। तडितोऽस्य सन्तीति तडित्वान्।

भावार्थः—आकाशादवतरन् सूर्य इव शोभमानस्तपोनिधिर्नारदो मुनिः तः श्रीकृष्णस्य पुरतो भुवि यावन्नावतीर्णस्तावदेव भगवान् श्रीकृष्णो मुनेः तार्थं पर्वतान्मेघ इव वेगेन समुत्तस्थौ।

( १३ ) प्रश्नः—

अथ प्रयत्नोन्नमितानमत्फणैर्धृते कथञ्चित्फणिनां गणैरधः।
न्यधायिषातामभिदेवकीसुतं सुतेन धातुश्चरणौ भुवस्तले॥

पद्यमिदं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं त।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य ालवधमहाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति। अत्र कविः आकाशादवतरतो स्य भुवि पादन्यासं वर्णयति।

अन्वयः—अथ धातुः सुतेन प्रयत्नोन्नमितानमत्फणैः, फणिनां गणैः भुवस्तले कथञ्चिद् धृते (सति) अभिदेवकीसुतं चरणौ न्यधायिषाताम्।

व्याख्या—अथ=श्रीकृष्णाभ्युत्थानानन्तरम्। धातुः=ब्रह्मणः। सुतेन= नारदेन। प्रयत्नेन उन्नमिताः प्रयत्नोन्नमिताः, प्रयत्नोन्नमिता अपि न्त्यः फणा येषां, तैः प्रयत्नोन्नमितानमत्फणैः=प्रयासेनोपरिकृतभारावनत-। फणिनां=सर्पाणाम्, गणैः=समूहैः। अधः=अधःप्रदेशे, पाताले इत्यर्थः। वत्=महता प्रयत्नेन। धृते=ऊढे, उत्तोलिते सति। भुवस्तले=भूतले। ाः सुतो देवकीसुतः, देवकीसुतस्य अभि इति अभिदेवकीसुतम्=देवकी-भिलक्ष्यीकृत्य, श्रीकृष्णस्याग्रे इत्यर्थः। चरणौ=पादौ ("पादः पदङ्घ्रि-ोऽस्त्रियाम्" इत्यमरः।) न्यधायिषाताम्=स्थापितौ, निहितौ। अत्र ां नमनोन्नमनासम्बन्धेऽपि मुनिगौरवाय तत्सम्बन्धाभिधानात् सम्बन्धाति-

शयोक्तिरियम् । तदुक्तं कुवलयानन्दे—"सम्बन्धातिशयोक्तिः स्यादयोगे कल्पनम्" इति । वंशस्थं वृत्तम् ।

समासः—प्रयत्नेन उन्नमिताः प्रयत्नोन्नमिताः, प्रयत्नोन्नमिता अपि मन्त्यः फणा येषां, तैः प्रयत्नोन्नमितानमत्फणैः । देवक्याः सुतः देवकीसुतः, देवकीसुतस्य अभि इति अभिदेवकीसुतम् ।

भावार्थः—स्वासनाद् भगवतः श्रीकृष्णस्याभ्युत्थानानन्तरं ब्रह्मणः देवर्षिर्नारदः प्रयत्नेनोत्थापनेऽप्यतिशयभारत्वादवनतफणैः सर्पसमूहैः महता प्रयत्नेन ऊढे भूतले भगवतः श्रीकृष्णस्याग्रे स्वपादौ स्थापितवान् ।

( १४ ) प्रश्नः—

> तमर्घ्यमर्घ्यादिकयाऽऽदिपूरुषः सपर्यया साधु स पर्यपूपुजत् ।
> गृहानुपैतुं प्रणयादभीप्सवो भवन्ति नापुण्यकृतां मनीषिणः ॥

पद्यमिदं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं विवृणुत । ( १९७९ )

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघ शिशुपालवधमहाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति । अत्र कविर्भगवता श्री कृतं नारदस्य पूजनप्रकारं वर्णयति ।

अन्वयः—आदिपूरुषः सः अर्घ्यं तम् अर्घ्यादिकया सपर्यया साधु पर्य मनीषिणः अपुण्यकृतां गृहान् प्रणयाद् उपैतुम् अभीप्सवः न भवन्ति ।

व्याख्या—आदिश्चासौ पूरुषश्च आदिपूरुषः, अत्र "अन्येषामपि दृश्य ( अष्टाध्यायी, ६ । ३ । १३७ ) इति पाणिनीयसूत्रेण वा दीर्घः । भगवान् श्रीकृष्णः । अर्घमर्हतीति अर्घ्यस्तम् अर्घ्यम्=पूजनीयम् । ("मूल विधावर्घः" इत्यमरः । ) तं=मुनिं नारदम् । अर्घार्थं द्रव्यम् अर्घ्यम्, अ यस्याः सा अर्घ्यादिका, तया अर्घ्यादिकया=पाद्यार्घ्यादिपूर्विकया । =अर्चया । ( "पूजानमस्यापचितिः सपर्यार्चाऽर्हणाः समाः" इत्य साधु=यथाविधिः । पर्यपूपुजत्=पूजयामास । (यतो हि) ईषन्ते इति मनस ईषिणो मनीषिणः=बुधाः ("विद्वान् विपश्चिद् दोषज्ञः सन् सुधीः बुधः । धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः" इत्यमरः कृतवन्तः इति पुण्यकृतः, न पुण्यकृतः अपुण्यकृतस्तेषाम् अपुण्यकृताम्= कृतवताम्, अधन्यानाम् । गृहान्=वेश्मनि । ( "गृहं गृहाः पुंसि निकाय्यनिलयालयाः" इत्यमरः ।) प्रणयात्=स्नेहात् । उपैतुं=गन्तुम् ।

अभिलाषुकाः । न=नैव । भवन्ति=जायन्ते । विद्वांसः पुण्यशीलानामेव जनानां गृहे प्रेम्णा गच्छन्तीति भावः । अत्र पूर्वार्द्धोक्तस्य विशेषस्य उत्तरार्द्धोक्तेन सामान्येन समर्थनं कृतमिति सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । वंशस्थं वृत्तम् ।

समासः—आदिश्चासौ पूरुषश्च आदिपूरुषः । अर्घमर्हतीति अर्घ्यः, तं अर्घ्यम् । अर्घार्थं द्रव्यम् अर्घ्यम्, अर्घ्यमादिर्यस्याः सा अर्घ्यादिका, तया अर्घ्यादिकया । ईषन्ते इति ईषिणः, मनस ईषिणः मनीषिणः । पुण्यं कृतवन्तः इति पुण्यकृतः, न पुण्यकृतः अपुण्यकृतः, तेषाम् अपुण्यकृताम् ।

भावार्थः—आदिपुरुषः भगवान् श्रीकृष्णः पूज्यं तं देवर्षि नारदं पाद्यार्घ्यादिपूर्विकया पूजया विधिपूर्वकं पूजयामास । यतो हि विचारशीलाः महात्मानोऽपुण्यकृतां गृहेषु प्रेम्णाऽपि गन्तुं नेच्छन्ति, किन्तु पुण्यकृतामेव गृहेषु प्रेम्णा गच्छन्ति ।

( १५ ) प्रश्नः—

न यावदेतावुदपश्यदुत्थितौ जनस्तुषाराञ्जनपर्वताविव ।
स्वहस्तदत्ते मुनिमासने मुनिश्चिरन्तनस्तावदभिन्यवीविशत् ॥

पद्यमिदं सप्रसङ्गं सन्दर्भभावार्थछन्दःकोशसमासविग्रहालङ्कारोल्लेखपूर्वकं सुरगिरा व्याख्यायताम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य शिशुपालवधमहाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति । अत्र कविः श्रीकृष्णस्य भगवतः नीलगिरिसाम्यं, नारदस्य च हिमालयसाम्यं वर्णयति ।

अन्वयः—जनः उत्थितौ एतौ तुषाराञ्जनपर्वतौ इव यावत् न उदपश्यत् तावत् चिरन्तनः मुनिः स्वहस्तदत्ते आसने मुनिम् अभिन्यवीविशत् ।

व्याख्या—जनः=द्वारकापुरीनिवासिलोकः । उत्थितौ=उत्तिष्ठमानौ । एतौ=नारदश्रीकृष्णौ । तुषारश्च अञ्जनं च तुषाराञ्जने, तयोः पर्वतौ, तौ तुषाराञ्जनपर्वतौ=हिमालयनीलगिरिपर्वतौ । इव=यथा । यावत्=यावत्कालम् । ('यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः ।) न उदपश्यत् =न ददर्श । तावत्=तावदेव । चिरन्तनः=पुराणः । मुनिः=श्रीकृष्णः "पुरा किल भगवान् बदरिकारण्ये नारायणावतारेण तपसि स्थितवान्" इति पुराणात् । स्वस्य हस्तौ स्वहस्तौ, ताभ्यां दत्तं स्वहस्तदत्तं, तस्मिन् स्वहस्तदत्ते=स्वकरसमर्पिते । आसने=विष्टरे । "विष्टरं पीठमासनम्" इत्यमरः । मुनिं=देवर्षिनारदम् । अभिन्यवीविशत्=स्वसम्मुखमुपवेशितवान् । अत्र नारदः श्वैत्याद्

हिमालयसदृशः, श्रीकृष्णश्च श्यामतयाऽञ्जनशैलोपम इत्यवधेयम् "तुषाराञ्जनपर्वताविव" इत्यत्रोपमालङ्कारः। तदुक्तं साहित्यदर्पणे—"साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः" इति। वंशस्थं वृत्तम्।

समासः—तुषारश्च अञ्जनश्च तुषाराञ्जने, तयोः पर्वतौ, तौ तुषाराञ्जनपर्वतौ। स्वस्य हस्तौ स्वहस्तौ, ताभ्यां दत्तं स्वहस्तदत्तम्, तस्मिन् स्वहस्तदत्ते।

भावार्थः—द्वारकापुर्यामुपस्थिताः लोकाः हिमालयसदृशं नारदं नीलगिरिसदृशं च भगवन्तं श्रीकृष्णं यावन्न दृष्टवन्तः, तावदेव चिरन्तनो मुनिः भगवान् श्रीकृष्णो मुनिं नारदं स्वकरसमर्पिते आसने स्वसम्मुखमुपवेशितवान्।

( १६ ) प्रश्नः—

महामहानीलशिलारुचः पुरो निषेदिवान् कंसकृषः स विष्टरे।
श्रितोदयाद्रेरभिसायमुच्चकैरचूचुरच्चन्द्रमसोऽभिरामताम् ॥

पद्यस्यास्य छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सप्रसङ्गं देववाण्या व्याख्या कार्या।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीत-शिशुपालवधमहाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति। अत्र कविः भगवतः श्रीकृष्णस्याग्रे नारदस्य चन्द्रसाम्यं वर्णयति।

अन्वयः—महामहानीलशिलारुचः कंसकृषः पुरः उच्चकैः विष्टरे निषेदिवान् सः अभिसायं श्रितोदयाद्रेः चन्द्रमसः अभिरामताम् अचूचुरत्।

व्याख्या—महानीलस्य शिला महानीलशिला, महती चासौ महानीलशिला महामहानीलशिला, तस्याः रुगिव रुक् यस्य सः महामहानीलशिलारुक्, तस्य महामहानीलशिलारुचः=बृहदिन्द्रनीलमणिकान्तेः, सिंहलद्वीपोत्पन्ननीलोपलश्यामस्येति यावत्। तथाह भगवान् अगस्त्यः—"सिंहलस्थाकरोद्भूता महानीलास्तु ते स्मृताः" इति। ("स्युः प्रभा रुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः" इत्यमरः।) कंसं कृष्टवान् इति कंसकृट्, तस्य कंसकृषः=कंसारेर्भगवतः श्रीकृष्णस्य। पुरः=अग्रे। उच्चकैः=उन्नते। विष्टरे=आसने। ("विष्टरः पीठमस्त्रियाम्" इति त्रिकाण्डशेषः।) निषेदिवान्=उपविष्टवान्, निषण्णः। सः=देवर्षिर्नारदः। सायं अभिलक्ष्यीकृत्येति अभिसायम्=सायङ्कालाभिमुखम्, सायङ्काले। श्रितः उदयाद्रिर्येन सः श्रितोदयाद्रिस्तस्य श्रितोदयाद्रेः=प्राप्तोदयाचलस्य। चन्द्रमसः=हिमांशोः। ("हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः" इत्यमरः।) अभितः=समन्तात्, रमन्ते जनाः अस्मिन्निति अभिरामः, तस्य भावः अभिरामता,

अभिरामताम् = रमणीयताम् । अचूचुरत्=चोरितवान्, प्राप्तवान्, अनुचकारेति वाऽर्थः । "महामहानीलशिलाश्च:" इत्यत्रोपमालङ्कारः । "अचूचुरत् चन्द्रमसोऽभिरामताम्" इत्यत्र चान्यस्यान्यधर्मसम्बन्धासम्भवाच्चन्द्रमसोऽभिरामतामिवाभिरामतामित्यौपम्यपर्यवसानादसम्भववस्तुसम्बन्धरूपो निदर्शनालङ्कारः। उपमा चात्र प्रधानमित्यनयोरङ्गाङ्गिभावेन सङ्करः । वंशस्थं वृत्तम् ।

समासः—महानीलस्य शिला महानीलशिला, महती चासौ महानीलशिला च महामहानीलशिला, तस्याः रुगिव रुक् यस्य सः महामहानीलशिलारुक्, तस्य महामहानीलशिलारुचः । कंसं कृष्टवान् इति कंसकृट्, तस्य कंसकृषः । सायमभिलक्ष्यीकृत्येति अभिसायम् । श्रितः उदयाद्रिर्येन सः श्रितोदयाद्रिस्तस्य श्रितोदयाद्रेः । अभि समन्तात् रमन्ते जनाः अस्मिन्निति अभिरामः, तस्य भावः अभिरामता, ताम् अभिरामताम् ।

भावार्थः—बृहदिन्द्रनीलमणिकान्तेः कंसारेर्भगवतः श्रीकृष्णस्याग्रे उच्चासने निषण्णः स देवर्षिर्नारदः सायङ्काले प्राप्तोदयाचलस्य चन्द्रमसो रमणीयतामचूचुरत् अर्थात् सुधांशुशोभां धारयामास ।

( १७ ) प्रश्नः—

विधाय तस्यापचितिं प्रसेदुषः प्रकाममप्रीयत यज्वनां प्रियः ।
ग्रहीतुमार्यान् परिचर्यया मुहुर्महानुभावा हि नितान्तमर्थिनः ॥

पद्यमिदं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य शिशुपालवधमहाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति । अत्र कविर्नारदपूजनानन्तरं भगवतः श्रीकृष्णस्य प्रसन्नतां वर्णयति ।

अन्वयः—यज्वनां प्रियः ( सः ) प्रसेदुषः तस्य अपचितिं विधाय प्रकामम् अप्रीयत । हि महानुभावाः आर्यान् परिचर्यया मुहुः ग्रहीतुं नितान्तम् अर्थिनः ( भवन्ति ) ।

व्याख्या—विधिनेष्टवन्तः इति यज्वानः, तेषां यज्वनाम् = विधिना (विधिपूर्वकं) इष्टवताम् ("यज्वा विधिनेष्टवान्" इत्यमरः ।), प्रियः=वल्लभः । (सः =भगवान् श्रीकृष्णः) प्रसेदुषः=प्रसन्नस्य । तस्य=देवर्षेर्नारदस्य । अपचितिं =पूजाम् । विधाय=कृत्वा । प्रकामं=नितान्तं, नितराम् । अप्रीयत=तुतोष । हि=यतः । महानुभावाः=महाप्रभावाः महात्मानः, आर्यान्=पूज्यान्, साधून् ।

परिचर्यया=सेवया, शुश्रूषया । मुहुः=वारं वारम्, भृशम् । ग्रहीतुं=वशीकर्तुं अनुकूलयितुम् । नितान्तं = नितराम् । अर्थनमर्थः, अर्थ एषामस्तीति अर्थिनः= अभिलाषुकाः, इच्छवः । (भवन्ति=जायन्ते) । अत्र पूर्वार्धोक्तस्य विशेषार्थस्य उत्तरार्धोक्तेन सामान्यार्थेन समर्थनादर्थान्तरन्यासोऽलङ्कारः । तदुक्तं चन्द्रालोके —"भवेदर्थान्तरन्यासोऽनुषक्तार्थान्तराभिधा" इति । वंशस्थं वृत्तम् ।

समासः—विधिनेष्टवन्तः इति यज्वानः, तेषां यज्वनाम् । महान् अनुभावः येषां ते महानुभावाः । अर्थनम् अर्थः, अर्थ एषामस्तीति अर्थिनः ।

भावार्थः—विधिनेष्टवतां प्रियो भगवान् श्रीकृष्णः प्रसन्नस्य तस्य नारदस्य मुनेः पूजां विधायात्यन्तं प्रीतोऽभवत् । यतो हि महाप्रभावाः महात्मानः पूज्य जनान् सेवया भृशमनुकूलयितुं नितरामिच्छवो जायन्ते ।

( १८ ) प्रश्नः—

अशेषतीर्थोपहृताः कमण्डलोर्निधाय पाणावृषिणाऽभ्युदीरिताः ।
अघौघविध्वंसविधौ पटीयसीर्नतेन मूर्ध्ना हरिरग्रहीदपः ॥

पद्यमिदं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वं व्याख्यायताम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीत शिशुपालवधमहाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति । अत्र नारदाभिषिक्तं जलं श्रीकृष्णो जग्राहेति वर्णयति कविः ।

अन्वयः—अशेषतीर्थोपहृताः कमण्डलोः पाणौ निधाय ऋषिणा अभ्युदीरिताः अघौघविध्वंसविधौ पटीयसीः अपः हरिः नतेन मूर्ध्ना अग्रहीत् ।

व्याख्या—अशेषाणि च तानि तीर्थानि च अशेषतीर्थानि, तेभ्य उपहृताः अशेषतीर्थोपहृताः=सकलतीर्थानीताः । कमण्डलोः=कमण्डलुतः, जलपात्रात् ( "अस्त्री कमण्डलुः कुण्डी" इत्यमरः । ) उद्धृत्येति शेषः । पाणौ=स्वहस्ते निधाय=स्थापयित्वा, गृहीत्वा । ऋषिणा=देवर्षिणा नारदेन । अभ्युदीरिताः =अभिषिक्ताः । अघानाम् ओघः अघौघः, तस्य यो विध्वंसः अघौघविध्वंसः तस्य विधिः अघौघविध्वंसविधिः, तस्मिन् अघौघविध्वंसविधौ=पापसमूहविनाशकरणे । ( 'कलुषं वृजिनैनोऽघमंहोदुरितदुष्कृतम्' इत्यमरः । "विधिर्विधाने दैवेऽपि च" इति हैमः । ) अतिशयेन पट्व्यः पटीयस्यः, ताः पटीयसीः=नितरां समर्थाः । अपः=सलिलानि । ( "आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्" इत्यमरः । ) हरिः=भगवान् श्रीकृष्णः । नतेन=विनम्रेण । मूर्ध्ना=मस्तकेन

शिरसा। ( "उत्तमाङ्गं शिरः शीर्षं मूर्द्धा ना मस्तकोऽस्त्रियाम्" इत्यमरः। ) अग्रहीत्=गृहीतवान्। वंशस्थं वृत्तम्।

समासः—अशेषाणि च तानि तीर्थानि च अशेषतीर्थानि, तेभ्य उपहृताः, ताः अशेषतीर्थोपहृताः। अघानाम् ओघः अघौघः, तस्य यो विध्वंसः अघौघ-विध्वंसः, तस्य विधिः अघौघविध्वंसविधिः, तस्मिन् अघौघविध्वंसविधौ। अति-शयेन पट्व्यः पटीयस्यः, ताः पटीयसीः।

भावार्थः—समस्ततीर्थेभ्य आनीतानि कमण्डलुत उद्धृत्य स्वहस्ते निधाय देवर्षिणा नारदेनाभिषिक्तानि पापसमूहविनाशकरणे नितरां समर्थानि जलानि भगवान् श्रीकृष्णो नतेन शिरसा स्वीकृतवान्।

( १९ ) प्रश्नः—

स काञ्चने यत्र मुनेरनुज्ञया नवाम्बुदश्यामतनुर्न्यविक्षत।
जिगाय जम्बूजनितश्रियः श्रियं सुमेरुशृङ्गस्य तदा तदासनम्॥

पद्यमिदं सप्रसङ्गं सन्दर्भकोशछन्दःसमासविग्रहालङ्कारभावार्थनिर्देशपूर्वकं व्याख्यायताम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"-महाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति। अत्र कविः श्रीकृष्णाधि-ष्ठितसुवर्णसिंहासनस्य शोभां वर्णयति।

अन्वयः—नवाम्बुदश्यामतनुः सः मुनेः अनुज्ञया काञ्चने यत्र ( आसने ) न्यविक्षत तत् आसनं तदा जम्बूजनितश्रियः सुमेरुशृङ्गस्य श्रियं जिगाय।

व्याख्या—नवः=नूतनश्चासौ अम्बुदः=मेघश्च नवाम्बुदः ( "प्रत्यग्रो-ऽभिनवो नव्यो नवीनो नूतनो नवः" इत्यमरः ) स इव श्यामा तनुर्यस्य सः नवाम्बुदश्यामतनुः=नूतननीलमेघसदृशश्रीकृष्णगात्रः। सः=भगवान् श्रीकृष्णः, मुनेः=देवर्षेर्नारदस्य, अनुज्ञया=आदेशेन, काञ्चने=हैमे, सौवर्णे इत्यर्थः, यत्र= यस्मिन्नासने, न्यविक्षत=उपाविशत्, उपतिष्ठ इत्यर्थः। तदासनम्=तद्धैमं सिंहासनम्, तदा=तस्मिन् समये, श्रीकृष्णोपवेशनकाले। जम्ब्वाः जम्बूभिर्वा जनिता श्रीर्यस्य तत्, तस्य जम्बूजनितश्रियः=दिव्यजम्बूमहाफलाऽऽहितशोभस्य, जम्बूवृक्षसमुत्पादितशोभस्येति वा। ( "जम्बूः सुरभिपत्रा च राजजम्बूर्महा-फला" इत्यमरः। ) सुमेरोः शृङ्गमिति सुमेरुशृङ्गम्, तस्य सुमेरुशृङ्गस्य=रत्न-सानुशिखरस्य ( "मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः" इत्यमरः। "कूटोऽस्त्री शिखरं शृङ्गम्" इत्यमरः )। श्रियं=शोभाम्, जिगाय=तिरश्चकार, अनु-

चकारेत्यर्थः । अत्र पूर्वार्द्धे नकारस्य तृतीयपादे च जकारस्यासकृदावृत्त्या तथोत्तरार्द्धे "श्रियः श्रियम्" इति "तदा तदा" इति च स्वरव्यञ्जनसमुदायस्य साम्यादनुप्रासः । किञ्च श्रीकृष्णस्य जम्बूवृक्षेण सह काञ्चनासनस्य च सुमेरुशृङ्गेण समं साम्यं प्रदर्शितमित्युपमालङ्कारः । उपमानुप्रासयोश्च नैरपेक्ष्येणावस्थानात् तिलतण्डुलन्यायात् संसृष्टिरलङ्कारः । वंशस्थं वृत्तम् ।

समासः—नवश्चासौ अम्बुदश्च नवाम्बुदः, स इव श्यामा तनुर्यस्य स नवाम्बुदश्यामतनुः । जम्ब्वा जम्बूभिर्वा जनिता श्रीर्यस्य तत्, तस्य जम्बूजनितश्रियः । सुमेरोः शृङ्गम् इति सुमेरुशृङ्गम्, तस्य सुमेरुशृङ्गस्य ।

भावार्थः—नवीननीलमेघवत् श्यामशरीरो भगवान् श्रीकृष्णो नारदस्य मुनेराज्ञया यस्मिन् सौवर्णे आसने उपविष्टस्तमासनं तदा दिव्यजम्बूवृक्षसमुत्पादितशोभस्य सुमेरुपर्वतशिखरस्य शोभां जिगाय ।

( २० ) प्रश्नः—

स तप्तकार्तस्वरभास्वराम्बरः कठोरताराधिपलाञ्छनच्छविः ।
विदिद्युते वाडवजातवेदसः शिखाभिराश्लिष्ट इवाम्भसां निधिः ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं देववाण्या व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य प्रथमसर्गादुद्धृतम् । अत्र कविः सुवर्णसिंहासनाधिरूढस्य श्रीकृष्णस्य समुद्रेण सह सादृश्यं वर्णयति ।

अन्वयः—तप्तकार्तस्वरभास्वराम्बरः कठोरताराधिपलाञ्छनच्छविः सः वाडवजातवेदसः शिखाभिः आश्लिष्टः अम्भसां निधिः इव विदिद्युते ।

व्याख्या—तप्तं च तत् कार्तस्वरञ्च तप्तकार्तस्वरम्, तप्तकार्तस्वरमिव भास्वरमम्बरं यस्य सः तप्तकार्तस्वरभास्वराम्बरः=सुतप्तसुवर्णवदुज्ज्वलवसनः, पीताम्बर इत्यर्थः । ( "चामीकरं जातरूपं महारजतकाञ्चने । रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्" इत्यमरः । ) कठोरश्चासौ ताराधिपश्च कठोरताराधिपः, तस्य लाञ्छनं कठोरताराधिपलाञ्छनम्, तस्य छविरिव छविर्यस्यासौ कठोरताराधिपलाञ्छनच्छविः=पूर्णचन्द्रचिह्नद्युतिः । ( "कठोरौ पूर्णकठिनौ" इत्यमरः । 'कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम्' इत्यमरः ।) सः=भगवान् श्रीकृष्णः । वडवायां=घोटिकायां, भवो वाडवः, वाडवश्चासौ जातवेदाश्च वाडवजातवेदाः, तस्य वाडवजातवेदसः=वाडवाग्नेः । शिखाभिः=

ज्वालाभिः। ( "वह्नेर्द्वयोर्ज्वालकीलावर्चिहेतिः शिखा स्त्रियाम्" इत्यमरः ) आश्लिष्टः=व्याप्तः, अम्भसां निधिः=जलनिधिः, समुद्रः, इव=यथा, विदिद्युते=बभौ, शुशुभे। अत्र तप्तकार्तस्वरभास्वराम्बरस्य जातवेदसः शिखाभिः सह तथा श्रीकृष्णस्याम्भसां निधिना सह साम्यप्रदर्शनेनोपमालङ्कारः। वंशस्थं वृत्तम्।

समासः—तप्तं च तत् कार्तस्वरं च तप्तकार्तस्वरम्, तप्तकार्तस्वरमिव भास्वरम् अम्बरं यस्य सः तप्तकार्तस्वरभास्वराम्बरः। कठोरश्चासौ ताराधिपश्च कठोरताराधिपः, तस्य लाञ्छनं कठोरताराधिपलाञ्छनम्, तस्य छविरिव छविर्यस्यासौ कठोरताराधिपलाञ्छनच्छविः। वडवायां घोटिकायां भवो वाडवो, वाडवश्चासौ जातवेदाश्च वाडवजातवेदाः, तस्य वाडवजातवेदसः। जाते जाते विद्यते इति जातवेदाः=यः सर्वेषु पदार्थेषु तिष्ठतीति भाव।

भावार्थः—सुतप्तसुवर्णवत् पीतवस्त्रधारी, पूर्णचन्द्रचिह्नद्युतिः, भगवान् श्रीकृष्णः वाडवाग्नेर्ज्वालाभिर्व्याप्तः समुद्र इव शुशुभे।

( २१ ) प्रश्नः—

रथाङ्गपाणेः पटलेन रोचिषामृषित्विषः संवलिता विरेजिरे।
चलत्पलाशान्तरगोचरास्तरोस्तुषारमूर्तेरिव नक्तमंशवः॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं व्याख्यायताम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य प्रथमसर्गादुद्धृतम्। अत्र कविर्भगवतः श्रीकृष्णस्य श्यामवर्णकान्तिसमूहमिश्रितस्य मुनेर्नारदस्य तेजांसि चन्द्रकिरणैस्तुल्यत्वं वर्णयति।

अन्वयः—रथाङ्गपाणेः रोचिषां पटलेन संवलिताः ऋषित्विषः नक्तं तरोः चलत्पलाशान्तरगोचराः तुषारमूर्तेः अंशवः इव विरेजिरे।

व्याख्या—रथस्याङ्गं रथाङ्गं, रथाङ्गं पाणौ यस्य सः, तस्य रथाङ्गपाणेः=चक्रपाणेः, श्रीकृष्णस्य, रोचिषाम्=तेजसाम्, ("रोचिः शोचिरुभे क्लीबे प्रकाशो द्योत आतपः" इत्यमरः।) पटलेन=समूहेन, संवलिताः=मिलिताः, ऋषित्विषः=मुनितेजांसि, नारदकान्तयः। नक्तम्=रात्रौ (सप्तम्यर्थेऽव्ययमिदम्)। तरोः=महीरुहस्य वृक्षस्येत्यर्थः। ( "वृक्षो महीरुहः शाखी विटपी पादपस्तरुः" इत्यमरः।) चलन्ति च तानि पलाशानि च चलत्पलाशानि, तेषामन्तराणि, चलत्पलाशान्तराणि, तान्येव गोचरः ( आश्रयः ) येषां ते चलत्पलाशान्तर-

गोचराः=चञ्चलतरुपत्रविवराश्रयाः, वायुकम्पिततरुपर्णमध्यप्रविष्टा इत्यर्थः। ( "पत्रं पलाशं छदनम्" इत्यमरः। "अन्तरमवकाशावधिपरिधानान्तर्धिभेदसादृश्ये" इत्यमरः। ) तुषारमूर्तेः=शीतांशोः, सुधांशोः, अंशवः=मयूखाः, किरणा इत्यर्थः। ( 'किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः" इत्यमरः। ) इवेत्युत्प्रेक्षायाम्। विरेजिरे=शुशुभिरे। अत्र रथाङ्गपाणिरोचिः पटलसंवलितर्षित्विषां चञ्चलतरुपलाशान्तरगोचरतुषारमूर्तिकिरणैरुत्प्रेक्षणं कृतमित्युत्प्रेक्षालङ्कारः। तदुक्तं काव्यप्रकाशे—"सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्" इति। अत्र वंशस्थं छन्दः।

समासः—रथस्य अङ्गं रथाङ्गम्, रथाङ्गं पाणौ यस्य सः, तस्य रथाङ्गपाणेः। ऋषेः त्विषः ऋषित्विषः। चलन्ति च तानि पलाशानि च चलत्पलाशानि, तेषाम् अन्तराणि चलत्पलाशान्तराणि, तान्येव गोचरः ( आश्रयः ) येषां ते चलत्पलाशान्तरगोचरः।

भावार्थः—चक्रपाणेर्भगवतः श्रीकृष्णस्य श्यामवर्णकान्तिसमूहेन मिश्रितस्य ऋषेर्नारदस्य शुभ्रवर्णं तेजः रात्रौ वायुकम्पिततरुपर्णमध्यप्रविष्टचन्द्रकिरणवच्छुशुभे।

( २२ ) प्रश्नः—

युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकासमासत।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः॥

इति पद्यं सप्रसङ्गं छन्दःकोषसन्दर्भभावार्थसमासविग्रहालङ्कारप्रदर्शनपूर्वकं व्याख्येयम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य शिशुपालवधमहाकाव्यस्य प्रथमसर्गादुद्धृतम्। अत्र कविर्भगवतः श्रीकृष्णस्य नारदशुभागमनजन्यं हर्षं वर्णयति।

अन्वयः—युगान्तकालप्रतिसंहृतात्मनः कैटभद्विषः, यस्यां तनौ जगन्ति सविकासम् आसत, तत्र तपोधनाभ्यागमसम्भवाः मुदः न ममुः।

व्याख्या—युगानाम् अन्तः युगान्तः, युगान्तस्य कालः इति युगान्तकालः, तस्मिन् प्रतिसंहृता आत्मानो येनासौ, तस्य युगान्तकालप्रतिसंहृतात्मनः=प्रलयकालोपसंहृतजीवस्य। कैटभं द्वेष्टि यः सः कैटभद्विट्, तस्य कैटभद्विषः=कैटभारेः। यस्यां तनौ=यस्मिन् शरीरे, जगन्ति=भुवनानि, लोकाः, ( "त्रिष्वथो जगती लोको विष्टपं भुवनं जगत्" इत्यमरः। ) सविकासम्=सविस्तरम्, असम्बाधम्,

यथासुखम् । आसत=अतिष्ठन्, तत्र=तस्याम्, तनौ=देहे, तप एव धनं यस्यासौ तपोधनः, तस्य अभ्यागमः तपोधनाभ्यागमः, तस्मात् तेन वा सम्भवन्तीति तपोधनाभ्यागमसम्भवाः=तपस्विश्रेष्ठनारदागमनप्रभवाः, मुदः=प्रमोदाः, हर्षा इत्यर्थः । ( "मुत् प्रीतिः प्रमदो हर्षप्रमोदामोदसम्मदाः" इत्यमरः । ) न ममुः= न मान्तिस्म, अतिरिच्यन्ते इत्यर्थः । अत्रातिशयोक्तिरलङ्कारः । वंशस्थं वृत्तम् ।

समासः—युगानाम् अन्तः युगान्तः, युगान्तस्य कालः इति युगान्तकालः, तस्मिन् प्रतिसंहृता आत्मानो येनासौ, तस्य युगान्तकालप्रतिसंहृतात्मनः । तप एव धनं यस्यासौ तपोधनः, तस्य अभ्यागमः तपोधनाभ्यागमः, तस्मात् तेन वा सम्भवन्तीति तपोधनाभ्यागमसम्भवाः । कैटभं द्वेष्टि यः स कैटभद्विट्, तस्य कैटभद्विषः ।

भावार्थः—प्रलयकाले उपसंहृतजीवस्य कैटभारेर्भगवतः श्रीकृष्णस्य, यस्मिन् शरीरे चतुर्दशभुवनानि सविस्तरमतिष्ठन्, तस्मिन् शरीरे तपस्विश्रेष्ठस्य नारदस्य आगमनेनोत्पन्नाः प्रीतयो न मान्तिस्म ।

( २३ ) प्रश्नः—

सितं सितिम्ना सुतरां मुनेर्वपुर्विसारिभिः सौधमिवाथ लम्भयन् ।
द्विजावलिव्याजनिशाकरांशुभिः शुचिस्मितां वाचमवोचदच्युतः ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारप्रदर्शन-पूर्वकं व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य प्रथमसर्गादुद्धृतम् । अत्र कविर्मुनिना नारदेन सह भगवतः श्रीकृष्णस्य वार्तालापं वर्णयति । तत्र श्रीकृष्णो नारदमवोच-दित्याह—सितमिति ।

अन्वयः—अथ अच्युतः विसारिभिः द्विजावलिव्याजनिशाकरांशुभिः सितं मुनेः वपुः सौधमिव सुतरां सितिम्ना लम्भयन् शुचिस्मितां वाचम् अवोचत् ।

व्याख्या—अथ=देवर्षिनारदश्रीकृष्णयोरुपवेशनानन्तरम् । अच्युतः= भगवान् श्रीकृष्णः, अभीक्ष्णं विसरन्तीति विसारिणस्तैः विसारिभिः=प्रसरण-शीलैः । द्विजानाम् अवलिः द्विजावलिः, सैव व्याजः यस्य सः द्विजावलि-व्याजः, स चासौ निशाकरश्च द्विजावलिव्याजनिशाकरः, तस्य अंशवस्तैः द्विजा-वलिव्याजनिशाकरांशुभिः=दन्तपङ्क्तिछद्मचन्द्रमयूखैः, ( "दन्तविप्राण्डजाः द्विजा" इत्यमरः । ) सितम्=शुभ्रम्, स्वभावशुक्लम् । मुनेः=देवर्षेर्नारदस्य,

वपुः=शरीरम्, सौधम्=राजसदनम् ("सौधोऽस्त्री राजसदनम्" इत्यमरः।) इव=यथा, सुतराम्=अत्यन्तम्, सितिम्ना=शुभ्रत्वेन, लम्भयन्=प्रापयन् शुचि स्मितं यस्यां सा, तां शुचिस्मिताम्=ईषद्धास्ययुक्ताम्, वाचम्=वाणीम् अवोचत्=उवाच।

समासः—अभीक्ष्णं विसरन्तीति विसारिणस्तैः विसारिभिः। द्विजानाम् अवलिः द्विजावलिः, सैव व्याजः यस्य सः द्विजावलिव्याजः, स चासौ निशाकरश्च द्विजावलिव्याजनिशाकरः, तस्य अंशवस्तैः द्विजावलिव्याजनिशाकरांशुभिः। शुचिः स्मितं यस्याः सा, तां शुचिस्मिताम्।

भावार्थः—नारदश्रीकृष्णयोरुपवेशनानन्तरं भगवान् श्रीकृष्णः प्रसरणशीलैः दन्तसमूहकपटचन्द्रकिरणैः स्वभावतः शुभ्रं नारदस्य मुनेः शरीरं सुधालिप्त राजसदनमिव अत्यन्तं शुभ्रत्वेन प्रापयन् ईषद्धास्ययुक्तां वाणीमुवाच।

( २४ ) प्रश्नः—

जगत्यपर्याप्तसहस्रभानुना न यन्नियन्तुं समभावि भानुना।
प्रसह्य तेजोभिरसंख्यतां गतैरदस्त्वया नुन्नमनुत्तमं तमः॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारप्रदर्शनपूर्वकं व्याख्येयम्। ( १९८३ )

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य प्रथमसर्गादुद्धृतम्। अत्र कविर्नारदस्य सूर्यादाधिक्यं वर्णयति।

अन्वयः—जगति अपर्याप्तसहस्रभानुना भानुना यत् तमः नियन्तुं न समभावि, अनुत्तमम् अदः तमः असंख्यतां गतैः तेजोभिः प्रसह्य त्वया नुन्नम्।

व्याख्या—जगति=विश्वस्मिन्, अपर्याप्ता सहस्रं भानवो यस्य, तेन अपर्याप्तसहस्रभानुना=अपरिच्छिन्नसहस्रकिरणेन। भानुना=सवित्रा, सूर्येणेत्यर्थः। ( "भानवोऽर्कहरांशवः" इति वैजयन्ती। "भानुर्हंसः सहस्रांशुस्तपनः सविता रविः" इत्यमरः। ) यत् तमः=यदज्ञानरूपं ध्वान्तम्। नियन्तुम्=दूरीकर्तुम् न समभावि=नाशकत्। नास्ति उत्तमं यस्मात्तदनुत्तमम्=नितरां प्रगाढम्, अदः= एतद्, तमः=अस्माकं मोहध्वान्तम् अज्ञानम्, असंख्यतां गतैः=अगण्यतां प्राप्तैः तेजोभिः=स्वप्रभावैः, प्रसह्य=बलात्, ( "प्रसह्य तु हठार्थकम्" इत्यमरः। ) त्वया=भवता, नुन्नं=छिन्नम्। अतः श्लाघ्यदर्शनीयो भवानिति भावः। अत्रोपमानाद् भानोः मुनेराधिक्यप्रतिपादनाद् व्यतिरेकालङ्कारः, वंशस्थं वृत्तम्।

**समासः**—अपर्याप्ता सहस्रं भानवो यस्य, तेन अपर्याप्तसहस्रभानुना। नास्ति उत्तमं यस्मात्तदनुत्तमम्।

**भावार्थः**—भगवान् श्रीकृष्णो नारदमुवाच—जगति अपरिच्छिन्नसहस्रकिरणेन सूर्येणापि यदज्ञानरूपं ध्वान्तं निवारयितुं न शेके, तद् नितरां प्रगाढम् अज्ञानरूपं तमः अनन्तैः स्वप्रभावैर्बलाद् भवता निरस्तम्।

( २५ ) प्रश्नः—

उदीर्णरागप्रतिरोधकं जनैरभीक्ष्णमक्षुण्णतयाऽतिदुर्गमम्।
उपेयुषो मोक्षपथं मनस्विनस्त्वमग्रभूमिर्निरपायसंश्रया॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा विवृणुत। ( १९७९ )

**उत्तरम्**—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति। अत्र कविर्नारदश्रीकृष्णयोर्वार्तालापं वर्णयति। अत्र नारदः श्रीकृष्णं भगवन्तम्प्रति "योगिनामपि त्वमेव साक्षात्करणीयः" इति स्वोक्तिं द्रढयन्नाह—उदीर्णेति।

**अन्वयः**—उदीर्णरागप्रतिरोधकम् अभीक्ष्णम् अक्षुण्णतया जनैः अतिदुर्गमं मोक्षपथम् उपेयुषः मनस्विनः त्वं निरपायसंश्रया अग्रभूमिः असि।

**व्याख्या**—उदीर्णश्चासौ रागश्च उदीर्णरागः, स एव प्रतिरोधको यस्मिन्नसौ उदीर्णरागप्रतिरोधकस्तम् उदीर्णरागप्रतिरोधकम्=प्रवृद्धविषयाभिलाषनिवारकम्, कान्तारपक्षे—मोहान्धचौरादिविरोधिगणसङ्कुलम्। अभीक्ष्णम्=निरन्तरम्। अक्षुण्णतया=अनभ्यस्तत्वेन, कान्तारपक्षे—अपरिचितत्वेन, अप्रतिहतत्वेन च। जनैः=मुमुक्षुभिः, कान्तारपक्षे—पान्थलोकैः। दुःखेन गम्यते इति दुर्गमः, अतिशयतो दुर्गमः अतिदुर्गमस्तमतिदुर्गमम्=अतिगहनं, गन्तुमशक्यम्। कान्तारपक्षे—अतिदुस्तरं, दुर्लङ्घ्यञ्च। मोक्षस्य पन्थाः मोक्षपथस्तं मोक्षपथम्=अपवर्गमार्गम्, कान्तार पक्षे च—उपेयुषः=परिशीलयतः, प्राप्तवतश्च। मनस्विनः=प्रशस्तमनसः, आत्मचिन्तापरायणस्येत्यर्थः, कान्तारपक्षे—उत्साहवतः, धीरस्य च। त्वम्=भवान् श्रीकृष्ण एव। निर्गतः अपायः यस्मात् सः निरपायः, निरपायः संश्रयो यस्याः सा निरपायसंश्रया=पुनरावृत्तिरहितप्राप्तिः, "न स पुनरावर्तते" इति श्रुतेः। कान्तारपक्षे—सकलभयविवर्जितत्वप्राप्तिः। अग्रभूमिः=प्राप्यस्थानम् ( "अग्रमालम्बने प्राप्ये" इति विश्वः ) असीति शेषः। तस्मान्मुमुक्षूणामपि त्वमेव साक्षात्करणीय इति भावः। यथा कस्यचित् कुतश्चित् सङ्क-

टान्निर्गतस्य केनचित् कान्तारेण गतस्य किञ्चिन्निर्बाधस्थानप्राप्तिरभयाय कल्पते तथा त्वमपि मुमुक्षोरिति मल्लिनाथः। मतान्तरे त्वत्र प्रकृतयोर्मुमुक्षुश्रीकृष्णयोः प्रतिपादकेनानेन वाक्येन उदीर्णरागादिश्लिष्टविशेषणैश्चौरादिभयसन्तप्तपान्थ-तत्प्राप्यस्थानयोरप्रकृतयोरर्थयोः प्रतीतिर्भवति, विशेष्यञ्च "त्वम्" न श्लिष्ट-मिति समासोक्तिरलङ्कारः। यदुक्तं काव्यप्रकाशे—"परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिरि"ति। अत्र वंशस्थं वृत्तम्।

समासः—उदीर्णश्चासौ रागश्च उदीर्णरागः, उदीर्णराग एव प्रतिरोधको यस्मिन्नसौ—उदीर्णरागप्रतिरोधकस्तम् उदीर्णरागप्रतिरोधकम्। अन्यत्र—उदीर्णो रागो यस्यासौ उदीर्णरागः=चौरादिः, स एव प्रतिरोधको यस्मिन्नसौ, तम् उदीर्णरागप्रतिरोधकम्। दुःखेन गम्यते इति दुर्गमः, अतिशयतो दुर्गमः अतिदुर्गमस्तम् अतिदुर्गमम्। मोक्षस्य पन्थाः मोक्षपथस्तं मोक्षपथम्। निर्गतः अपायः यस्मात् सः निरपायः, निरपायः संश्रयो यस्याः सा निरपायसंश्रया। अग्रे भूमिः अग्रभूमिः।

भावार्थः—नारदो भगवन्तं श्रीकृष्णमुवाच—यथा मोहान्धचौरादिविरोधिगणसङ्कुलं निरन्तरमप्रतिहतत्वेन (यातायाताभावात्) पान्थलोकैरतिदुर्लङ्घ्यं भीषणं वनमार्गं प्राप्तवतो धीरस्य कृते किञ्चिन्निर्बाधं वासस्थानमेव प्राप्यं भवति, तथैव प्रवृद्धविषयाभिलाषनिवारकं मुहुर्मुहुरक्षुण्णतया मुमुक्षुभिर्जनैरतिगहनं मोक्षमार्गं प्राप्तवतः मुमुक्षोः पुरुषस्य कृते भवानेव पुनरावृत्तिरहितं प्राप्यस्थानमस्तीति भावः।

( २६ ) प्रश्नः—

उदासितारं निगृहीतमानसैर्गृहीतमध्यात्मदृशा कथञ्चन।
बहिर्विकारं प्रकृतेः पृथग् विदुः पुरातनं त्वां पुरुषं पुराविदः॥

इति पद्यं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारोल्लेखपूर्वकं देववाण्या व्याख्येयम्। ( १९७८ )

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति। अत्र कविर्नारदश्रीकृष्णयोर्वार्तालापं वर्णयति। तत्र नारदो भगवन्तं श्रीकृष्णम्प्रति—ननु साङ्ख्यशास्त्रोक्तपुरुषसाक्षात्कारान्मोक्षो नास्मत्साक्षात्कारादित्याशङ्क्याह—उदासितारमिति

अन्वयः—पुराविदः त्वां निगृहीतमानसैः अध्यात्मदृशा कथञ्चन गृहीतम् उदासितारम् बहिर्विकारं प्रकृतेः पृथक् पुरातनं पुरुषं विदुः।

व्याख्या—पुरा=पूर्वकालं, पुरावृत्तम्, विदन्तीति पुराविदः=पूर्वज्ञाः, पुराणतत्त्वविदः, कपिलादयो मुनयः, त्वाम्=भवन्तं श्रीकृष्णं, निगृहीतं मानसं यैस्तैः निगृहीतमानसैः=अन्तर्निबद्धचित्तैर्योगिभिः। ("चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः" इत्यमरः।) आत्मनि अधि इत्यध्यात्मम्, अध्यात्मं या दृक् सा अध्यात्मदृक्, तया अध्यात्मदृशा=प्रत्यग्दृष्ट्या। कथञ्चन=महाप्रयासेन, गृहीतम्=साक्षात्कृतम्, उदासितारं=उदासीनम्, प्रकृतौ स्वार्थप्रवृत्तायामपि स्वयं तद्भिन्नत्वादस्पृष्टमित्यर्थः। विकारेभ्यो बहिरिति बहिर्विकारम् =महदादिप्रकृतिविकारभिन्नम्। प्रकृतेः=प्रधानात्, त्रिगुणात्मिकायाः कारणरूपायाः मूलप्रकृतेः। ("प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे" इति यादवः।) पृथक्=भिन्नम्, पुराभवः पुरातनस्तं पुरातनम्=पुराणम्, अनादि, सनातनमित्यर्थः। पुरुषम्=पुरुषपदवाच्यम्, विज्ञानघनम्। ("क्षेत्रज्ञः आत्मा पुरुषः" इत्यमरः।) विदुः=जानन्ति। तथा चोक्तं सांख्यकारिकायाम्—

'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः'॥ का० ३॥

पद्येऽस्मिन् वंशस्थं वृत्तम्।

समासः—निगृहीतं मानसं यैस्तैः निगृहीतमानसैः। पुरा (पूर्वकालं, पुरावृत्तम्) विदन्तीति पुराविदः। आत्मनि अधि अध्यात्मम्, अध्यात्मं या दृक् सा अध्यात्मदृक्, तया अध्यात्मदृशा। विकारेभ्यो बहिरिति बहिर्विकारम्। पुरा भवः पुरातनः, तं पुरातनम्।

भावार्थः—पुराणतत्त्वविदः कपिलसनत्कुमारादयो महामुनयो भवन्तं संयतचित्तैर्योगिभिरध्यात्मदृष्ट्या कथञ्चन साक्षात्कृतं क्रियाशून्यं, महदादिप्रकृतिविकारभिन्नं त्रिगुणात्मिकायाः कारणरूपायाः मूलप्रकृतेरपि भिन्नमनादि पुरुषं जानन्ति।

(२७) प्रश्नः—

उपप्लुतं पातुमदो मदोद्धतैस्त्वमेव विश्वम्भर! विश्वमीशिषे।
ऋते रवेः क्षालयितुं क्षमेत कः क्षपातमस्काण्डमलीमसं नभः॥

इति पद्यं सप्रसङ्गं देववाण्या व्याख्यायताम्। (१९८०)

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य 'शिशुपालवध'महाकाव्यस्य प्रथमसर्गादुद्धृतम्। अत्र कविः श्रीकृष्णनारदवार्ताप्रसङ्गे श्रीनारदमुनिमुखेन श्रीकृष्णस्य भगवतः जगत्पालनसामर्थ्यं वर्णयति।

**अन्वयः**—विश्वम्भर ! मदोद्धतैः उपप्लुतम् अदः विश्वं पातुं त्वमेव ईशिषे, क्षपातमस्काण्डमलीमसं नभः क्षालयितुं रवेः ऋते कः क्षमेत ?

**व्याख्या**—नारदो भगवन्तं श्रीकृष्णमुवाच—उपप्लुतमिति। हे विश्वम्भर! —विश्वं बिभर्त्तीति विश्वम्भरस्तत्सम्बुद्धौ हे विश्वम्भर !=हे जगत्पालक! मदेन उद्धताः मदोद्धतास्तैः=कंसादिभिः। ("दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः" इत्यमरः।) उपप्लुतम्=पीडितम्। अदः=इदम्, एतत्। विश्वम् =संसारं, पातुम्=रक्षितुम्, त्वमेव=भवानेव, ईशिषे=समर्थोऽसि। तमसः काण्डानि तमस्काण्डानि, क्षपायास्तमस्काण्डानि क्षपातमस्काण्डानि, तैर्मलीमसं, तत् क्षपातमस्काण्डमलीमसम्=रजन्यन्धकारसन्तानमलिनम्। ("काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु" इत्यमरः। "मलीमसं तु मलिनं कच्चरं मलदूषितम्" इत्यमरः।) नभः=गगनम्, क्षालयितुम्=प्रकाशयितुम्, रवेः=भास्करात्, ऋते=विना, भास्करमन्तरेणेत्यर्थः। कः=कः पुरुषः, क्षमेत=शक्नुयात्! न कोऽपि शक्नुयादित्यर्थः। अत्रैकस्यैव सामान्यधर्मस्य वाक्यद्वये "ईशिषे" "क्षमेत" इति द्विधा निर्देशात् प्रतिवस्तूपमालङ्कारः, वंशस्थं वृत्तम्।

**समासः**—विश्वं बिभर्तीति विश्वम्भरः, तत्सम्बुद्धौ हे विश्वम्भर ! मदेन उद्धताः मदोद्धताः, तैः मदोद्धतैः। तमसः काण्डानि तमस्काण्डानि, क्षपायास्तमस्काण्डानि क्षपातमस्काण्डानि, तैः मलीमसं, तत् क्षपातमस्काण्डमलीमसम्।

**भावार्थः**—नारदो भगवन्तं श्रीकृष्णमुवाच यत्—हे जगत्पालक ! दर्पवृद्धैः कंसादिभिः पीडितमिदं विश्वं पालयितुं भवानेव समर्थः, यतो हि निशान्धकारसमूहमलिनमाकाशं प्रकाशयितुं सूर्यमतिरिच्य कः शक्तः ? न कोऽपीति भावः।

( २८ ) **प्रश्नः**—

> सटाच्छटाभिन्नघनेन बिभ्रता नृसिंह ! सैंहीमतनुं तनुं त्वया।
> स मुग्धकान्तास्तनसङ्गभङ्गुरैरुरोविदारं प्रतिचस्करे नखैः॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारप्रदर्शनपूर्वं सुरगिरा व्याख्येयम्।

**उत्तरम्**—**सन्दर्भः प्रसङ्गनिर्देशश्च**—पद्यमिदं महाकविश्रीमाघप्रणीतस्य 'शिशुपालवध"महाकाव्यस्य प्रथमसर्गादुद्धृतम्। अत्र नारदो भगवन्तं श्रीकृष्णं तेन नृसिंहावतारे कृतं हिरण्यकशिपुवधं स्मारयति।

**अन्वयः**—हे नृसिंह ! अतनुं सैंहीं तनुं बिभ्रता सटाच्छटाभिन्नघनेन त्वया मुग्धकान्तास्तनसङ्गभङ्गुरैः नखैः उरोविदारं प्रतिचस्करे।

व्याख्या—नारदः श्रीकृष्णं भगवन्तमुवाच—सटाच्छटेत्यादि। हे नृसिंह !=हे नरश्रेष्ठ ! हे नृसिंहावतारधारिन्, अतनुं=विस्तीर्णाम्। सैंहीम्=सिंहाकाराम्। तनुं=शरीरम्, ("तनुः काये कृशेऽल्पे च" इति विश्वः।) विभ्रता=दधता, नृसिंहावतारभाजेत्यर्थः। सटानां छटाः सटाच्छटाः, सटाच्छटाभिः केशरसमूहैः भिन्नाः घनाः येन सः, तेन सटाच्छटाभिन्नघनेन=केशरसमूहविदारितमेघेन। ("सटा जटाकेशरयोः" इति विश्वः।) त्वया, सः=हिरण्यकशिपुः। कान्तायाः स्तनौ कान्तास्तनौ, मुग्धौ च कान्तास्तनौ मुग्धकान्तास्तनौ, तयोः सङ्गः मुग्धकान्तास्तनसङ्गः, तेन भङ्गुराः, तैः मुग्धकान्तास्तनसङ्गभङ्गुरैः=मनोहरकामिनीकुचसंसर्गभज्यमानैः ("मुग्धः सौम्ये नवे मूढे" इति वैजयन्ती।) नखैः=नखरैः। ("पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्" इत्यमरः।) उरः विदार्येति उरोविदारम्=उरो विदार्य, प्रतिचस्करे=हतः। अत्र वंशस्थं वृत्तम्।

समासः—ना सिंह इव नृसिंहः, तत्सम्बुद्धौ हे नृसिंह ! ("उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" २।१।५६) इति सूत्रेण समासः। पक्षे—ना चासौ सिंहश्च नृसिंहः, तत्सम्बुद्धौ हे नृसिंह ! न तनुः अतनुः, ताम् अतनुम्। सिंहस्य इयं सैंही, ताम्—सैंहीम्। सटानां छटाः सटाच्छटाः, ताभिः भिन्नाः घनाः येन सः, तेन सटाच्छटाभिन्नघनेन। कान्तायाः स्तनौ कान्तास्तनौ, मुग्धौ च कान्तास्तनौ मुग्धकान्तास्तनौ, तयोः सङ्गः मुग्धकान्तास्तनसङ्गः, तेन भङ्गुराः, तैः मुग्धकान्तास्तनसङ्गभङ्गुरैः। अथवा मुग्धाः या कान्ताः मुग्धकान्ताः, स्तनयोः सङ्गः स्तनसङ्गः, मुग्धकान्तानां स्तनसङ्गः मुग्धकान्तास्तनसङ्गः, तेन भङ्गुरास्तैः—मुग्धकान्तास्तनसङ्गभङ्गुरैः। उरः विदार्येति उरोविदारम्।

भावार्थः—नारदो मुनिर्भगवन्तं श्रीकृष्णमुवाच—हे नृसिंह ! विस्तीर्णं सिंहाकारं देहं धारयता केसरसमूहविदारितमेघेन भवता तादृशो हिरण्यकशिपुः अत्यन्तं सुकुमारैः स्वनखैरुरो विदार्य हतः।

( २९ ) प्रश्नः—

प्रभुर्बुभूषुर्भुवनत्रयस्य यः शिरोऽतिरागाद् दशमं चिकर्तिषुः।
अतर्कयद् विघ्नमिवेष्टसाहसः प्रसादमिच्छासदृशं पिनाकिनः॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा व्याख्येयम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति। अत्र कविर्नारदश्रीकृष्ण-वार्ताप्रसङ्गे श्रीनारदमुखेन रावणस्य तपःशौर्यं वर्णयति।

अन्वयः—यः भुवनत्रयस्य प्रभुः बुभूषुः अतिरागात् दशमं शिरः चिकर्तिषुः इष्टसाहसः इच्छासदृशं पिनाकिनः प्रसादं विघ्नम् इव अतर्कयत्।

व्याख्या—यः=रावणः, त्रयोऽवयवा अस्येति त्रयम्, भुवनानां त्रयं भुवन-त्रयम्, तस्य भुवनत्रयस्य=लोकत्रयस्य, प्रभुः=अधिपः स्वामीत्यर्थः। ("प्रभुः परिवृढोऽधिपः" इत्यमरः।) बुभूषुः=भवितुमिच्छुः, अतिरागात्=स्नेहा-धिक्यात्, महोत्साहादिति यावत्। दशमं शिरः=दशमं मूर्धानम्, चिकर्तिषुः=कर्तितुमिच्छुः, इष्टं साहसं यस्यासौ इष्टसाहसः=प्रियसाहसः, अत एव, समान इव पश्यतीति सदृशः, इच्छया सदृशः इच्छासदृशः, तम् इच्छासदृशम्=स्वकाङ्क्षानुकूलम्, ("इच्छा-काङ्क्षा-स्पृहे-हातृड्-वाञ्छा" इत्यमरः।) पिनाकोऽस्यास्तीति पिनाकी, तस्य पिनाकिनः=शूलपाणेः शिवस्य, प्रसादं=वरम्, विघ्नमिव=शिरश्छेदनकर्मान्तरायमिव, अतर्कयत्=व्यचारयत्, उत्प्रेक्षितवान् इत्यत्र "स रावणो नाम रक्षो बभूवेति" पूर्वेणान्वयः। अत्र वंशस्थं छन्दः।

समासः—त्रयः अवयवा अस्येति त्रयम्, भुवनानां त्रयं भुवनत्रयम्, तस्य भुवनत्रयस्य। इष्टं साहसं यस्यासौ इष्टसाहसः। समान इव पश्यति सदृशः, इच्छया सदृशः इच्छासदृशस्तमिच्छासदृशम्। पिनाकोऽस्यास्तीति पिनाकी, तस्य पिनाकिनः।

भावार्थः—त्रयाणां लोकानां स्वामी भवितुमिच्छुः, अतएव भगवतः शिव-स्यातिशयप्रसन्नतायै, अत्यधिकभक्त्या दशमं शिरः कर्तितुमिच्छुर्महासाहसी यो रावण इच्छानुकूलं शिवस्य वरदानं विघ्नवदवगतवान्। एतादृशः स रावणो नाम रक्षो बभूव।

(३०) प्रश्नः—

पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः।
विगृह्य चक्रे नमुचिद्विषा वली य इत्थमस्वास्थ्यमहर्दिवं दिवः॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारोल्लेखपूर्वकं देववाण्या व्याख्येयम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य

"शिशुपालवध" महाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति। अत्र कविः राक्षसराजस्य रावणस्य स्वर्गलुण्ठनं वर्णयति।

अन्वयः—बली यः नमुचिद्विषा विगृह्य पुरीम् अवस्कन्द, नन्दनं लुनीहि रत्नानि मुषाण, अमराङ्गनाः हर, इत्थम् अहर्दिवं दिवः अस्वास्थ्यं चक्रे, (स रावणो नाम रक्षो बभूवेति पूर्वेणान्वयः)।

व्याख्या—बलमस्यास्तीति बली=बलवान्, क्वचिद् "वशी" इति पाठ, तत्र समर्थः इत्यर्थः। यः=रावण, न मुञ्चतीति नमुचिः, नमुचिं द्वेष्टीति नमुचिद्विट्, तेन नमुचिद्विषा=इन्द्रेण सह, ("जम्भभेदी हरिहयः स्वराण्नमुचिसूदनः" इत्यमरः।) विगृह्य=विरुध्य, पुरीम्=अमरावतीम्, ("पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम्। स्थानीयं निगम." इत्यमरः। "नगरी त्वमरावती" इत्यमरः।) अवस्कन्द=पुनः पुनरवरुरोध। नन्दनम्=इन्द्रोद्यानम्, ("नन्दनं वन"मित्यमरः।) लुनीहि=पुनःपुनश्चिच्छेद, रत्नानि=श्रेष्ठवस्तूनि, मणीन् वा, ("रत्नं श्रेष्ठमणावपि" इति विश्वः।) मुषाण=पुनः पुनर्मुमोष, पुनः पुनश्चोरयामास, अमराङ्गनाः,=देवाङ्गनाः, अप्सरसो वा। हर=पुनः पुनर्जहार, इत्थम्=अनेन प्रकारेण, अहनि च दिवा च अहर्दिवम्=अहन्यहनि, प्रतिदिनम्, क्वचिदहर्निशमिति पाठः, तत्राहोरात्रमित्यर्थः। दिवः=स्वर्गस्य। स्वस्थस्य भावः स्वास्थ्यम्, न स्वास्थ्यम् इति अस्वास्थ्यम्=उपद्रवं, चक्रे=कृतवान्।

पद्यमिदं केचनैवं व्याख्यायन्ति—

बली=बलवान्, यः=रावणः, नमुचिद्विषा=इन्द्रेण सह, विगृह्य=विरुध्य, अहर्दिवं=अहन्यहनि, दिवः=स्वर्गस्य, अस्वास्थ्यं चक्रे=पीडां जनयामास, कथं तदित्याह—स हि अनुचरान् प्रत्याह—भोः प्रहस्त! पुरीम्=अमरावतीम्, अवस्कन्द=निरुन्धि। अयि महोदर! त्वमितो नन्दनं लुनीहि=छिन्धि। त्वञ्च वाष्कलः रत्नानि मुषाण=कोषं रिक्तीकुरु। त्वं पुनः कुम्भकर्णः, अमराङ्गनाः हर=सुरवनिताः बन्दीकुरु। इत्थं सोऽस्वास्थ्यं चक्रे।

अत्र स्वर्गस्यास्वास्थ्यकरणेऽनेकक्रियाणामवस्कन्दादीनां हेतुत्वेनोपादानात् समुच्चयोऽलङ्कारः। तदुक्तं काव्यप्रकाशे-"तत्सिद्धिहेतावेकस्मिन् यत्रान्यत्करं भवेत्। समुच्चयोऽसौ" इति। वंशस्थं वृत्तम्।

समासः—न मुञ्चतीति नमुचिः, नमुचिं द्वेष्टीति नमुचिद्विट्, तेन नमुचिद्विषा। अहनि च दिवा च अहर्दिवम्। स्वस्थस्य भावः स्वास्थ्यम्, न स्वास्थ्यम् अस्वास्थ्यम्। बलमस्यास्तीति बली।

भावार्थः—यः बली रावणः देवेन्द्रेण सह विरुध्य अमरावतीं नगरीं पुनः पुनरवरुरोध, इन्द्रस्य नन्दनवनं पुनः पुनश्चिच्छेद, रत्नानि पुनः पुनर्मुमोष, देवाङ्गना अपि पुनः पुनर्जहार। एवं सः स्वर्गं पीडयामास। एतादृशः स रावणो नाम रक्षो बभूव।

( ३१ ) प्रश्नः—

विदग्धलीलोचितदन्तपत्रिकाविधित्सया नूनमनेन मानिना।
न जातु वैनायकमेकमुद्धृतं विषाणमद्यापि पुनः प्ररोहति॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा व्याख्यायताम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य प्रथमसर्गादुद्धृतम्। अत्र कविः रावणस्य गणेश-विजयं दर्शयति।

अन्वयः—मानिना अनेन विदग्धलीलोचितदन्तपत्रिकाविधित्सया नूनं जातु उद्धृतं वैनायकम् एकं विषाणम् अद्यापि पुनः न प्ररोहति।

व्याख्या—मनोऽस्यास्तीति मानी, तेन मानिना=अहङ्कारिणा, अनेन= रावणेन, विदग्धाः लीलाः यासां ता विदग्धलीलाः, अथवा विदग्धानां लीलाः विदग्धलीलाः, तासामुचिताः विदग्धलीलोचिताः, विदग्धलीलोचिताश्च ताः दन्तपत्रिकाश्च विदग्धलीलोचितदन्तपत्रिकाः, विधातुमिच्छा विधित्सा, विदग्ध-लीलोचितदन्तपत्रिकाणां या विधित्सा, तया विदग्धलीलोचितदन्तपत्रिका-विधित्सया=चतुरविलासिनीधारणोचितदन्तमयकर्णाभरणरचनेच्छया। क्वचिद् "विधित्सया" इत्यस्य स्थाने "चिकीर्षया" इति पाठस्तत्रापि स एवार्थः। नूनम्=निश्चितम्, जातु=कदाचित् ("कदाचिज्जातु" इत्यमरः।) उद्धृतम्= उत्पाटितम्, उत्खातम्। विनयति=अपाकरोति, विघ्नानिति विनायकः, विनायकस्येदं वैनायकम्=विनायकसम्बन्धि, गाणपतम्। एकम्=अद्वितीयम्, विषाणं=दन्तः, ("विषाणं पशुश्रृङ्गे स्यात् क्रीडाद्विरददन्तयोः" इत्यमरः।) अद्यापि=इदानीमपि, बहुतिथे काले गतेऽपीत्यर्थः, पुनः=भूयः, न प्ररोहति= न प्रादुर्भवति। अत्र "रावणेनैव विनायक एकदन्तः कृतः" इत्युत्प्रेक्षणा-दुत्प्रेक्षालङ्कारः। सा चोत्प्रेक्षा नूनमित्यनेन व्यज्यते इति वाच्योत्प्रेक्षा। वंशस्थं वृत्तम्।

समासः—मानोऽस्यास्तीति मानी, तेन मानिना। विदग्धाः लीलाः यासां ताः विदग्धलीलाः, अथवा—विदग्धानां लीलाः विदग्धलीला, तासामुचिताः विदग्धलीलोचिताः, विदग्धलीलोचिताश्च ताः दन्तपत्रिकाश्च विदग्धलीलोचितदन्तपत्रिकाः, विधातुमिच्छा विधित्सा, विदग्धलीलोचितदन्तपत्रिकाणां या विधित्सा, तया विदग्धलीलोचितदन्तपत्रिकाविधित्सया। विनयति (अपाकरोति) विघ्नानिति विनायकः, विनायकस्येदं वैनायकम्।

भावार्थः—अहङ्कारिणाऽनेन रावणेन चतुरविलासिनीधारणोचितदन्तमयविभूषणनिर्माणेच्छया नूनं कदाचिदुत्पाटितो गणेशस्यैको दन्तोऽद्यापि भूयो न समुद्भवति।

( ३२ ) प्रश्नः—

तपेन वर्षाः शरदा हिमागमो वसन्तलक्ष्म्या शिशिरः समेत्य च।
प्रसूनक्लृप्तिं दधतः सदर्तवः पुरेऽस्य वास्तव्यकुटुम्बितां ययुः॥

पद्यमिदं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं व्याख्यायताम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति। अत्र कविः रावणस्य दिग्विजयमाह।

अन्वयः—सदा प्रसूनक्लृप्तिं दधतः ऋतवः वर्षाः तपेन हिमागमः शरदा शिशिरः वसन्तलक्ष्म्या च समेत्य अस्य पुरे वास्तव्यकुटुम्बितां ययुः।

व्याख्या—सदा=सर्वदा, न तु यथाकालम्। प्रसूनानां क्लृप्तिः प्रसूनक्लृप्तिः, तां प्रसूनक्लृप्तिम्=कुसुमसम्पत्तिम्, ("स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्" इत्यमरः।) दधतः=धारयन्तः, बिभ्रतः। क्वचित् 'प्रसूनक्लृप्तं ददतः' इति पाठस्तत्र—प्रसूनं=कुसुमफलं, तदेव क्लृप्तं=भाटकं, ददतः=ददानाः। कुटुम्बिनो हि सकुटुम्बाः परावसथे वसन्तो गृहपतये भूपतये वा गृहभाटकं ददति। ऋतवः=षड्ऋतवः, वर्षाः=प्रावृट् ऋतुः (स्त्री), तपेन=ग्रीष्मेण (पुंसा)। ("उष्ण ऊष्मागमस्तपः" इत्यमरः।) हिमस्य आगमः यस्मिन् सः हिमागमः=हेमन्तर्तुः (पुमान्), शरदा=शरदृतुना (नार्या) सह। शिशिरः=शिशिरर्तुः (भर्ता) ("स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा अथ शरत्स्त्रियाम्" इत्यमरः।), वसन्तस्य लक्ष्मीः वसन्तलक्ष्मीः, तया वसन्तलक्ष्म्या=वसन्तर्तुश्रिया (पत्न्या) सह। चेति समुच्चये, समेत्य=मिथुनीभावेन मिलित्वा, दाम्पत्य-

भावेन सम्मिल्य । अस्य=रावणस्य, पुरे=नगरे, लङ्कायामित्यर्थः । वसन्तीति वास्तव्याः, कुटुम्बानि सन्ति एषामिति कुटुम्बिनः, वास्तव्याश्च ते कुटुम्बिनः, तेषां भावः, तां वास्तव्यकुटुम्बिताम्=प्रतिवासित्वम् । ययुः=प्रापुः । क्वचित् "दधुः" इति पाठः, अर्थे तु न विशेषः । अत्र पुरे युगपत् सर्वर्तुसम्बन्धाभिधानादसम्बन्धे सम्बन्धरूपातिशयोक्तिरलङ्कारः । वंशस्थं वृत्तम् ।

समासः—हिमस्य आगमः यस्मिन् सः हिमागमः । वसन्तस्य लक्ष्मीः वसन्तलक्ष्मीः, तया वसन्तलक्ष्म्या । प्रसूनानां क्लृप्तिः प्रसूनक्लृप्तिः, तां प्रसूनक्लृप्तिम् । वसन्तीति वास्तव्याः, कुटुम्बानि सन्ति एषामिति कुटुम्बिनः, वास्तव्याश्च ते कुटुम्बिनः वास्तव्यकुटुम्बिनः, तेषां भावः, तां वास्तव्यकुटुम्बिताम् ।

भावार्थः—सदा पुष्पश्रियं धारयन्तः षड् ऋतवः—ग्रीष्मेन सह वर्षा, शरदा सह हेमन्तः, वसन्तशोभया सह शिशिरर्तुः ( दाम्पत्यभावेन ) मिलित्वा रावणस्यास्य नगर्याः ( लङ्कापुर्याः ) प्रतिवासिनः संवृत्ताः ।

( ३३ ) प्रश्नः—

बलावलेपादधुनाऽपि पूर्ववत् प्रबाध्यते तेन जगज्जिगीषुणा ।
सतीव योषित्प्रकृतिः सुनिश्चला पुमांसमभ्येति भवान्तरेष्वपि ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वं व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति । अत्र कविः शिशुपालस्य संसारपीडकत्वं वर्णयति ।

अन्वयः—जिगीषुणा तेन बलावलेपाद् अधुना अपि पूर्ववत् जगत् प्रबाध्यते सती योषित् इव सुनिश्चला प्रकृतिः भवान्तरेषु अपि पुमांसम् अभ्येति ।

व्याख्या—जेतुमिच्छुः जिगीषुस्तेन जिगीषुणा=नित्योत्साहवतेत्यर्थः तेन=शिशुपालेन, बलस्य अवलेपः बलावलेपः, तस्मात् बलावलेपात्=बलगर्वात् ( "दर्पोऽवलेपोऽवष्टम्भः" इत्यमरः । ), अधुना=साम्प्रतमपि ("एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा" इत्यमरः । ) जगत्=लोकः, प्रबाध्यते=पीड्यते । तथाहि—सती=पतिव्रता, योषित्=वधूरिव ( "स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः । प्रतीपदर्शिनी वामा वनिता महिला तथा ॥" इत्यमरः ) सुनिश्चला=ध्रुवा, प्रकृतिः=स्वभावः, अन्ये भवाः भवान्तराणि, तेषु भवान्तरेषु

जन्मान्तरेष्वपि । पुमांसं=पुरुषम्, अभ्येति=प्राप्नोति, "अन्वेति" इति पाठान्तरे अनुगच्छतीत्यर्थः । उक्तं च भगवता मनुना—

'पतिं या नाभिचरति मनोवाक्काय संयता ।
सा भर्तुर्लोकमाप्नोति सद्भिः साध्वीति चोच्यते ॥' इति ।

अत्र योषिदिवेत्यत्रोपमालङ्कारः, किञ्चोत्तरार्धोक्तेन सामान्यार्थेन पूर्वार्धोक्तस्य विशेषार्थस्य समर्थनात् सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । वंशस्थं वृत्तम् ।

समासः—बलस्य अवलेपः बलावलेपः, तस्माद् बलावलेपात् । जेतुमिच्छुः जिगीषुः, तेन जिगीषुणा । सुष्ठु निश्चला सुनिश्चला । अन्ये भवा भवान्तराणि, तेषु भवान्तरेषु ।

भावार्थः—विजयेच्छुः स शिशुपालो बलदर्पात् अधुनाऽपि पूर्ववद् भुवनं पीडयति । यतो हि पतिव्रता नारीव स्थिरा प्रकृतिः द्वितीयजन्मन्यपि तमेव (पूर्वजन्मनः) पुरुषं प्राप्नोति ।

( ३४ ) प्रश्नः—

तदेनमुल्लङ्घितशासनं विधेर्विधेहि कीनाशनिकेतनातिथिम् ।
शुभेतराचारविपक्त्रिमापदो निपातनीया हि सतामसाधवः ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं गीर्वाणवाण्या व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति । अत्र श्लोके नारदः भगवन्तं श्रीकृष्णं शिशुपालस्य वधार्थं निवेदयति ।

अन्वयः—तद् विधेः उल्लङ्घितशासनम् एनं कीनाशनिकेतनातिथिं विधेहि । हि शुभेतराचारविपक्त्रिमापदः असाधवः सतां निपातनीयाः ।

व्याख्या—तत्=तस्मात् कारणात्, विधेः=विधातुः, ( 'विधिर्विधाने दैवे' इत्यमरः ।) उल्लङ्घितं शासनं येनासौ उल्लङ्घितशासनस्तमुल्लङ्घितशासनम् =अतिक्रान्तदेवशासनम्, एनम्=शिशुपालम् । कीनाशस्य निकेतनं, तस्य अतिथिः, तं कीनाशनिकेतनातिथिम्=यमगृहाभ्यागतं, ( "कीनाशः कर्कशे क्षुद्रे कृतान्तोपांशुघातिनो" इति विश्वः । "अतिथिर्ना गृहागतः" इति विश्वः । ) विधेहि=कुरु, व्यापादयेत्यर्थः । हि=यतः, शुभादितरः शुभेतरः, शुभेतरश्चासौ आचारश्च शुभेतराचारः, विपाकेन निर्वृत्ताः विपक्त्रिमाः, शुभेतराचारेण

विपक्त्रिमा आपदो येषां ते शुभेतराचारविपक्त्रिमापदः=दुष्टाचरणेन परिपक्व-विपत्तयः। न साधवः असाधवः=दुष्टाः। सताम्=सज्जनानाम्, निपातनीयाः=मारणीयाः, वध्याः। 'विपादनीया' इति पाठान्तरेऽपि तुल्य एवार्थः। 'तदेनमि'त्यस्य स्थाने तमेवमिति पाठान्तरे—तम्=चैद्यं शिशुपालम्, एवम्=पूर्वोक्तप्रकारेण, विधेस्त्यक्ताऽऽज्ञामिति योज्यम्। अत्र सामान्येन विशेषसमर्थन-रूपोऽर्थान्तरन्यासोऽलङ्कारः। वंशस्थं छन्दः।

**समासः**—उल्लङ्घितं शासनं येनासौ उल्लङ्घितशासनस्तम् उल्लङ्घित-शासनम्। कीनाशस्य निकेतनं कीनाशनिकेतनम्, तस्य अतिथिः कीनाश-निकेतनातिथिस्तं कीनाशनिकेतनातिथिम्। शुभादितरः शुभेतरः, शुभेतरश्चासौ आचारश्च शुभेतराचारः, विपाकेन निर्वृत्ताः विपक्त्रिमाः, शुभेतराचारेण विपक्त्रिमा आपदो येषां ते शुभेतराचारविपक्त्रिमापदः। न साधवः असाधवः।

**भावार्थः**—नारदः श्रीकृष्णमुवाच—अतो देवदैत्यराक्षसानुग्रहनिग्रहं स्वेच्छा-पूर्वकं स्वयमेव कारणात् ब्रह्मण आज्ञाया उल्लङ्घनकर्तारं शिशुपालमिमं भवान् हन्यात्। यतो ह्यशुभाचरणेन परिपक्वविपत्तयो दुष्टाः सज्जनानां कृते वध्याः भवन्ति।

( ३५ ) **प्रश्नः**—

ओमित्युक्तवतोऽथ शार्ङ्गिण इति व्याहृत्य वाचं नभ-
स्तस्मिन्नुत्पतिते पुरः सुरमुनाविन्दोः श्रियं बिभ्रति।
शत्रूणामनिशं विनाशपिशुनः क्रुद्धस्य चैद्यं प्रति
व्योम्नीव भ्रुकुटिच्छलेन वदने केतुश्चकारास्पदम्॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारप्रदर्शन-पूर्वकं सुरगिरा व्याख्येयम्।

**उत्तरम्**—**सन्दर्भः प्रसङ्गनिर्देशश्च**—पद्यमिदं महाकविश्रीमाघप्रणीतस्य 'शिशुपालवध'महाकाव्यस्य प्रथमसर्गादुद्धृतमस्ति। अत्र कविः इन्द्रसन्देशं मुक्त्वा नारदे स्वर्गं प्रस्थिते सति शिशुपालं प्रति श्रीकृष्णस्य भगवतः क्रोधं दर्शयति।

**अन्वयः**—तस्मिन् सुरमुनौ इति वाचं व्याहृत्य नभः उत्पतिते पुरः इन्दोः श्रियं बिभ्रति ( सति ) अथ 'ओम्' इति उक्तवतः चैद्यं प्रति क्रुद्धस्य शार्ङ्गिणः वदने, व्योम्नीव अनिशं शत्रूणां विनाशपिशुनः। केतुः भ्रुकुटिच्छलेन आस्पदं चकार।

व्याख्या—तस्मिन्=पूर्वोक्ते, सुराणां मुनिः सुरमुनिस्तस्मिन् सुरमुनौ=देवर्षौ नारदे। इति=इत्थम्भूताम्, पूर्वोक्ताम्। वाचं=वाणीम्। व्याहृत्य=उक्त्वा। नभः=गगनं, उत्पतिते=समुद्गते। पुरः=अग्रे। इन्दोः=सुधांशोः, श्रियं=शोभाम्। बिभ्रति=धारयति (सति)। अथ=इन्द्रसन्देशश्रवणानन्तरम्, ओम्=तथाऽस्तु, एवं भवतु। ("ओम् प्रश्नेऽङ्गीकृतौ रोषे" इति विश्वः।) इति=इत्थम्, अनेन प्रकारेण, उक्तवतः=कथितवतः, तथास्त्वित्यङ्गीकृतवतः, चैद्यं प्रति=चेदिदेशाधिपतिं शिशुपालं प्रति। क्रुद्धस्य=कुपितस्य। शृङ्गस्य विकारः शार्ङ्गम्, तदस्यास्तीति शार्ङ्गी, तस्य शार्ङ्गिणः=शार्ङ्गपाणेः श्रीकृष्णस्य, वदने=मुखे, व्योम्नि=आकाशे, इव=यथा, अविद्यमाना निशा (विरतिः) यस्मिन् तत् यथा स्यात्तथा अनिशम्=सर्वदा, शत्रूणाम्=रिपूणाम्, विनाशस्य पिशुनः विनाशपिशुनः=उच्छेदसूचकः, केतुः=केतुनामोत्पातविशेषः, ("पिशुनौ खलसूचकौ" इत्यमरः। ("केतुर्द्युतौ पताकायां महोत्पातारिलक्ष्मसु" इत्यमरः।) भ्रुकुटेश्छलं भ्रुकुटिच्छलम्, तेन भ्रुकुटिच्छलेन, अथवा भ्रुवो या कुटिः सैव छलं, तेन भ्रुकुटिच्छलेन=भ्रूभङ्गव्याजेन। आस्पदं=स्थितम्, प्रतिष्ठाम्। चकार=विदधे, कृतवान्। अत्र वाक्यार्थभूतस्य वीररससहकारिणः रौद्ररसस्य स्थायिभावः क्रोधोऽनुमेयः, तदविनाशभूतस्याङ्गिनो वीररसस्यापि स्थायिभाव उत्साहोऽप्युत्पन्न इति सहृदयैर्विचारणीयम्। अत्र 'वदने व्योम्नीव' इत्युपमालङ्कारः। मतान्तरे तूत्प्रेक्षा। किञ्च—भ्रुकुटिच्छलेन केतुरित्यत्र छलशब्देन भ्रुकुटिरूपस्योपमेयस्यासत्यतां प्रतिपाद्योपमानभूतस्य केतोः सत्यता प्रदर्शितेति अपह्नुत्यलङ्कारः। इन्दोः श्रियं कथमन्यो धृतवानिति तत्सदृशी श्रीः तेन धृतेत्यर्थे पर्यवसानान्निदर्शना। निदर्शनोपमयोश्चापह्नुत्युपकारकत्वादङ्गाङ्गिभावेन सङ्करः। अत्र शार्दूलविक्रीडितं वृत्तम्—"सूर्याश्वैर्मसजास्तताः सगुरवः शार्दूलविक्रीडितम्" इति लक्षणात्।

समासः—शृङ्गस्य विकारः शार्ङ्गम्, तदस्यास्तीति शार्ङ्गी, तस्य शार्ङ्गिणः। सुराणां मुनिः सुरमुनिस्तस्मिन् सुरमुनौ। विनाशस्य पिशुनः विनाशपिशुनः। भ्रुकुटेश्छलं भ्रुकुटिच्छलं, तेन भ्रुकुटिच्छलेन, अथवा—भ्रुवः या कुटिः, सैव छलं, तेन भ्रुकुटिच्छलेन। अविद्यमाना निशा (विरतिः) यस्मिन् तद् यथा स्यात्तथा अनिशम्।

भावार्थः—एवमुक्त्वा आकाशं समुद्गते देवर्षौ नारदे तथा च पुरः चन्द्र-

श्रियं बिभ्रति सति, 'तथाऽस्तु" इत्युक्तवतः, चैद्यं शिशुपालं प्रति क्रुद्धस्य शार्ङ्ग-पाणेर्भगवतः श्रीकृष्णस्य मुखे आकाश इव नित्यं रिपूच्छेदसूचकः केतुनामोत्पात-विशेषः भ्रूभङ्गव्याजेन प्रतिष्ठां चकार।

॥ इति प्रथमः सर्गः ॥

---

## द्वितीयः सर्गः

( ३६ ) प्रश्नः—

यियक्षमाणेनाहूतः पार्थेनाथ द्विषन्मुरम्।
अभिचैद्यं प्रतिष्ठासुरासीत्कार्यद्वयाकुलः॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वं देववाण्या व्याख्यायताम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीत "शिशुपालवध"महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति। अत्र कविः श्रीकृष्ण बलरामोद्धवेषु सञ्जातमन्त्रवर्णनाय बीजं वपति—यियक्षमाणेनेति।

अन्वयः—अथ यियक्षमाणेन पार्थेन आहूतः अभिचैद्यं प्रतिष्ठासुः मुरं द्विषन् कार्यद्वयाकुलः आसीत्।

व्याख्या—अथ = इन्द्रसन्देशश्रवणानन्तरम्। ( "मङ्गलानन्तरारम्भप्रश्न कार्त्स्न्येष्वथोऽथ" इत्यमरः ) यष्टुमिच्छति यियक्षति, यियक्षतीति यियक्षमाण स्तेन यियक्षमाणेन = यष्टुमिच्छता, यज्ञं कर्तुमिच्छता। पृथाया अयम् ( अपत्यं पुमान् ) पार्थस्तेन पार्थेन = पृथापुत्रेण युधिष्ठिरेण। आहूतः = निमन्त्रितः (अपरम्) चैद्यमभिलक्ष्येति अभिचैद्यम् = शिशुपालं प्रति, प्रतिष्ठासुः = प्रस्थातु मिच्छुः मुरं द्विषन् = मुरारिर्भगवान् श्रीकृष्णः। द्वौ अवयवौ यस्य तद् द्वयम् कार्ययोर्द्वयमिति कार्यद्वयम्, तेन आकुलः कार्यद्वयाकुलः = देवकार्यमित्रकार्यद्वय व्याकुलः। आवश्यके कार्यद्वये आपतिते यदि पूर्वं पार्थं प्रति व्रजति ततः शिशु पाल उपेक्षितो भवति, अथ शिशुपालमास्कन्दति ततो युधिष्ठिरो रुष्यति। अत पूर्वं मया देवकार्यं पूरणीयं सुहृदो युधिष्ठिरस्य वेति कार्यद्वये सन्दिग्धमनाः ( "विहस्तव्याकुलौ समौ" इत्यमरः। ) आसीत् = बभूव। अतो मन्त्रस्याव सरोऽयमिति भावः। क्वचिद् 'द्विषन्मुरम्' इत्यस्य स्थाने "मुरं द्विषन्" इति पाठान्तरम्। अत्र अनुष्टुप्छन्दः।

समासः—यष्टुमिच्छति यियक्षति, यियक्षतीति यियक्षमाणस्तेन यियक्षमाणेन। पृथाया अयम् ( अपत्यं पुमान् ) पार्थः, तेन पार्थेन। चैद्यम् अभिप्रत्येति अभिचैद्यम्। द्वौ अवयवौ यस्य तद् द्वयम्, कार्ययोः द्वयम् इति कार्यद्वयम्, तेन आकुलः कार्यद्वयाकुलः।

भावार्थः—इन्द्रसन्देशश्रवणानन्तरं यज्ञं कर्तुमिच्छता पृथापुत्रेण युधिष्ठिरेणाहूतः तथा तत्कालमेव शिशुपालं प्रत्याक्रमणार्थं प्रस्थातुमिच्छुर्भगवान् श्रीकृष्णः परस्परविरुद्धपरमावश्यककार्येष्वेकस्मिन्नेव समये समुपस्थितेष्वतीव चिन्तित आसीत्।

( ३७ ) प्रश्नः—

साद्धंमुद्धवसीरिभ्यामथासावासदत् सदः।
गुरुकाव्यानुगां बिभ्रच्चान्द्रीमभिनभःश्रियम्॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा व्याख्येयम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति। अत्र कविरुद्धवबलरामाभ्यां सह भगवतः श्रीकृष्णस्य सभाभवनप्रवेशं वर्णयति।

अन्वयः—अथ असौ अभिनभः गुरुकाव्यानुगां चान्द्रीं श्रियं बिभ्रत् ऊद्धवसीरिभ्यां साद्धं सदः आसदत्।

व्याख्या—अथ=सन्देहानन्तरम्, असौ=भगवान् श्रीकृष्णः। नभसीति अभिनभः=गगने। गुरुश्च काव्यश्च गुरुकाव्यौ, तौ अनुगौ यस्याः यस्यां वा रामाभ्यां सा गुरुकाव्यानुगा, तां गुरुकाव्यानुगाम्=बृहस्पति-शुक्राचार्यानुयाताम्। ( "गुरुस्तुः गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे" इति विश्वः। "शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः" इत्यमरः। ) चान्द्रीं=सुधांशुसम्बन्धिनीम्, श्रियम्=शोभाम्। बिभ्रत्=धारयन्। उद्धवश्च सीरी च उद्धवसीरिणौ, ताभ्याम् उद्धवसीरिभ्याम्=उद्धवबलदेवाभ्याम्, साद्धंम्=सह, उद्धवबलरामाभ्यां सहित इत्यर्थः। ( "नीलाम्बरो रौहिणेयस्तालाङ्को मुसली हली। सङ्कर्षणः सीरपाणिः कालिन्दी भेदनो बलः" इत्यमरः। ) सदः=सभाम्। आसदत्=अगमत्, प्राप। अत्राह मनुः—

गिरिपृष्ठं समारुह्य प्रासादं वा रहोगतः।
अरण्ये निःशलाके वा मन्त्रयेद् भावभाविनौ॥

अत्रान्यस्य श्रियं कथमन्यो वहत्विति चान्द्रीं श्रियमिव श्रियं दधदित्यर्थे पर्यवसानान्निदर्शनालङ्कारः, "वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना" इति कुवलयानन्दे प्रोक्तत्वात् । अत्रानुष्टुब्वृत्तम् ।

समासः—नभसि इति अभिनभः । गुरुश्च काव्यश्च गुरुकाव्यौ, तौ अनुगौ यस्याः यस्यां वा सा गुरुकाव्यानुगा, तां गुरुकाव्यानुगाम् । उद्धवश्च सीरी च उद्धवसीरिणौ, ताभ्यां उद्धवसीरिभ्याम् ।

भावार्थः—एवं सन्देहानन्तरं सः भगवान् श्रीकृष्ण आकाशे बृहस्पति-शुक्राचार्यानुयातां चान्द्रीं श्रियं धारयन् उद्धवबलरामाभ्यां सह सभासदनं प्राप ।

( ३८ ) प्रश्नः—

जाज्वल्यमाना जगतः शान्तये समुपेयुषी ।
व्यद्योतिष्ट सभावेद्यामसौ नरशिखित्रयी ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वं देववाण्या व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति । अत्र कविः श्रीकृष्ण-बलरामोद्धवानामग्नित्रयसाम्यं वर्णयति ।

अन्वयः—जगतः शान्तये समुपेयुषी जाज्वल्यमाना असौ नरशिखित्रयी सभावेद्यां व्यद्योतिष्ट ।

व्याख्या—जगतः=संसारस्य । शान्तये=अनुपद्रवाय, मङ्गलार्थम्, समुपेयुषी=मिलिता, सङ्गता । जाज्वल्यमाना=भृशं ज्वलन्ती । असौ=एषा त्रयः अवयवाः यस्याः सा त्रयी, नरा एव शिखिनः नरशिखिनः, तेषां त्रयी नरशिखित्रयी=श्रीकृष्णबलरामोद्धवपुरुषपावकत्रयी । ( "लोहिताश्वो वायुसखः शिखावानाशुशुक्षणिः । हिरण्यरेता हुतभुग् दहनो हव्यवाहनः" इत्यमरः । ) सभैव वेदिः सभावेदिः, तस्यां सभावेद्याम्=परिषत्परिष्कृतभूमौ सभामण्डपे । ( "वेदिः परिष्कृता भूमिः" इत्यमरः । ) व्यद्योतिष्ट=दीप्यते स्म । अत्र श्रीकृष्णोद्धवबलरामेषु शिखित्वारोपात्तेषां शिखिरूपेणैव बोधो भवतीति रूपकालङ्कारः । तदुक्तं साहित्यदर्पणे—"रूपकं रूपितारोपो विषये निरपह्नवे" इति । अत्रानुष्टुब्वृत्तम् ।

समासः—त्रयः अवयवाः यस्याः सा त्रयी, नरा एव शिखिनः नरशिखिनः, तेषां त्रयी नरशिखित्रयी । सभैव वेदिः सभावेदिः, तस्यां सभावेद्याम् ।

भावार्थः—जगत्यस्मिन् उपद्रवाणां शान्तये मिलिता भृशं ज्वलन्ती एषा श्रीकृष्णबलरामोद्धवपुरुषपावकत्रयी सभामण्डपे शुशुभे ।

( ३६ ) प्रश्नः—

करदीकृतभूपालो भ्रातृभिर्जित्वरैर्दिशाम् ।
विनाऽप्यस्मदलं भूष्णुरिज्यायै तपसः सुतः ॥

इति पद्य सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारप्रदर्शनपूर्वकं सुरगिरा व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य 'शिशुपालवध' महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति । अत्र कविः बलरामश्रीकृष्णोद्धवेषु प्रचलितायां मन्त्रणायां भगवतः श्रीकृष्णस्य स्वमतं वर्णयति ।

अन्वयः—दिशां जित्वरैः भ्रातृभिः करदीकृतभूपालः तपसः सुतः अस्मद्विना अपि इज्यायै अलं भूष्णुः ।

व्याख्या—दिशाम्=काष्ठानाम् । ( 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः । ) जेतुं शीलाः जित्वराः, तैः जित्वरैः=जयनशीलैः । ("जेता जिष्णुश्च जित्वरः" इत्यमरः । ) भ्रातृभिः=भीमादिभिर्हेतुभिः । करं ददतीति करदाः, न करदाः अकरदाः, अकरदा करदाः सम्पद्यमानाः कृताः करदीकृताः, करदीकृताः भूपाला येन यस्यासौ करदीकृतभूपालः=वशीकृतराजमण्डलः । ( 'भागधेयः करो बलिः' इत्यमरः । ) तपसः=धर्मस्य ('तपश्चान्द्रायणादौ स्याद् धर्मे लोकान्तरेऽपि च' इति विश्वः । ) सुतः=पुत्रः । धर्मात्मजो युधिष्ठिर इत्यर्थः । अस्मद्विनापि=अस्माभिर्विनापि । इज्यायै=यागाय, अलम्=पर्याप्तो, भूष्णुः=भवनशीलः, भविता । ( भूष्णुर्भविष्णुर्भविता' इत्यमरः । ) अत एव जैत्रयात्रैव विधेया न तु यज्ञयात्रेति भावः । अत्रानुष्टुब्वृत्तम् ।

समासः—करं ददातीति करदाः, न करदाः अकरदाः, अकरदाः करदाः सम्पद्यमानाः करदीकृताः, करदीकृताः भूपाला येन यस्य वाऽसौ करदीकृतभूपालः । जेतुं शीलाः जित्वराः, तैः जित्वरैः ।

भावार्थः—श्रीकृष्ण उवाच—दिग्जयनशीलैः भ्रातृभिः करदीकृतभूपालो धर्मराजो युधिष्ठिरोऽस्मद्विनाऽपि यज्ञं सम्पादयितुं समर्थः, अतो यज्ञे गमनापेक्षया शिशुपालवधार्थं प्रयाणमेव श्रेष्ठं वर्तते ।

( ४० ) प्रश्नः—

न दूये सात्वतीसूनुः यन्मह्यमपराध्यति ।
यत्तु दन्दह्यते लोकमदो दुःखाकरोति माम् ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वं सुरगिरा व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य 'शिशुपालवध'महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति । अत्र कविर्वर्णयति यत् श्रीकृष्णो न स्वार्थसाधनाय, किन्तु लोकानुग्रहार्थमेव शिशुपालं हन्तुमिच्छति।

अन्वयः—सात्वतीसूनुः यत् मह्यमपराध्यति ( तत् ) न दूये यत्तु लोकं दन्दह्यते, अदः मां दुःखाकरोति ।

व्याख्या—सत्वतोऽपत्यं स्त्री सात्वती, भगवतः श्रीकृष्णस्य पितृष्वसा सात्वत्याः सूनुः सात्वतीसूनुः=सात्वतीपुत्रः शिशुपालः । ( 'आत्मजस्तनयः सूनुः सुतः पुत्रः' इत्यमरः । ) यत्=यतः, यस्मात् कारणात्, मह्यम्=भगवते श्रीकृष्णाय । ( अत्र 'क्रुधद्रुहेर्ष्याऽसूयार्थानां यं प्रति कोपः' इति सूत्रेण सम्प्रदानाच्चतुर्थी । ) अपराध्यति=द्रुह्यति । तत्=तस्मात् कारणात्, न दूये=न परितप्ये, ( किन्तु ) यत्तु=यतो हि । लोकम्=जनम्, ( 'लोकस्तु भुवने जने' इत्यमरः । ) दन्दह्यते=निष्कारणं पीडयति, अदः=इदं लोकदहनम् । 'अतः' इति पाठान्तरे अस्मात् कारणादित्यर्थः । मां=भगवन्तं श्रीकृष्णम् । दुःखाकरोति=बाधयति । ( 'पीडा बाधा व्यथा दुःखम्' इत्यमरः । ) अत्रानुष्टुब्वृत्तम् ।

समासः—सत्वतोऽपत्यं स्त्री सात्वती, सात्वत्या सूनुः सात्वतीसूनुः । गर्हितं दहति दन्दह्यते ।

भावार्थः—भगवान् श्रीकृष्ण उवाच—शिशुपालो यत् मह्यं द्रुह्यति तस्मात् कारणादहं न खिद्ये, किन्तु सः लोकं निष्कारणं पीडयति, इदमेव लोकपीडनं मां दुःखाकरोति ।

( ४१ ) प्रश्नः—

नैतल्लघ्वपि भूयस्या वचो वाचाऽतिशय्यते ।
इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम् ॥

पद्यमिदं छन्दोऽलङ्कारप्रसङ्गनिर्देशपुरःसरं व्याख्येयम् । ( १९८४ )

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य

"शिशुपालवध"महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति। अत्र कविर्बलराममुखेन श्रीकृष्णोक्तेरनुल्लङ्घनीयत्वम्प्रतिपादयति।

अन्वयः—लघु अपि एतत् वचः भूयस्या वाचा न अतिशय्यते। इन्धनौघधक् अपि अग्निः त्विषा पूषणं न अत्येति।

व्याख्या—लघु अपि=स्वल्पमपि, एतद्=भगवता श्रीकृष्णेनोक्तं, वचः=वचनम्, ("व्यवहार उक्तिर्लपितं भाषितं वचनं वचः" इत्यमरः।) भूयस्या=विस्तृतया, वाचा=अस्मदादीनां वाण्या, न अतिशय्यते=नोल्लङ्घयितुं शक्यते। इन्धनानाम्=काष्ठानाम् ("काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित् स्त्रियाम्" इत्यमरः।), ओघः=राशिः, इन्धनौघस्तं दहतीति इन्धनौघधक्, अपि=काष्ठराशिदाहकोऽपि, अग्निः=वैश्वानरो वह्निरित्यर्थः। ("अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः। कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात्।" इत्यमरः।) त्विषा=प्रभया, कान्त्येत्यर्थः, पूषणम्=भास्करम्, सूर्यमित्यर्थः। ("भास्वद्-विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः। विकर्तनार्कमार्तण्डमिहिराऽरुणपूषणः" इत्यमरः।) न=नहि, अत्येति=अतिक्रामति, न पराभवितुं शक्नोति। अत्र समानधर्मबिम्बप्रतिबिम्बिततया दृष्टान्तालङ्कारः, "दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्" इति लक्षणात्। अत्रानुष्टुप् छन्दः।

समासः—इन्धनानामोघः इन्धनौघः, तं दहतीति इन्धनौघधक्।

भावार्थः—स्वल्पाक्षरमपि भगवतः श्रीकृष्णस्येदं वचनं विपुलयाऽस्मदादीनां वाण्या नोल्लङ्घयितुं शक्यते। काष्ठराशिदाहकोऽग्निरपि स्वतेजसा सूर्यं नातिक्रामति।

(४२) प्रश्नः—

षड्गुणाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः।
ग्रन्थानधीत्य व्याकर्तुमिति दुर्मेधसोऽप्यलम्॥

इति पद्यं सप्रसङ्गं छन्दोऽलङ्कारनिर्देशपूर्वकं व्याख्येयम्। (१९८०, ८३)

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति। अत्र बलरामोद्धवश्रीकृष्णेषु प्रचलितायां मन्त्रणायां बलरामस्योक्तिं प्रदर्शयति कविः। तत्र बलरामः नन्वात्महितेच्छुना स्वामिना 'बुद्धेः फलमनाग्रहः' इति न्यायेन शास्त्रज्ञवचनं प्रतिकूलमपि ग्राह्यमेवेत्याशङ्क्याह—षड्गुणा इति।

अन्वयः—दुर्मेधसः अपि ग्रन्थान् अधीत्य गुणाः षट् शक्तयः तिस्रः सिद्धयः तिस्रः उदयाः त्रयः इति व्याकर्तुम् अलम् ।

व्याख्या—दुष्टा मेधा येषां ते दुर्मेधसोऽपि = मन्दबुद्धयोऽपि, दुर्बुद्धयोऽपि। ग्रन्थान् = औशनसबार्हस्पत्यादिनीतिशास्त्राणि । अधीत्य = पठित्वा । गुणाः = सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाख्याः । ("सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षड्गुणाः" इत्यमरः ।) शक्तयः=प्रभुत्वमन्त्रोत्साहाख्याः । तिस्रः= तिस्र एव । ("शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः" इत्यमरः । ) सिद्धयः= प्रभावमन्त्रोत्साहशक्तित्रयसाध्याः पुरुषार्थलाभात्मिक्यः, प्रभुत्वसिद्धिमन्त्रसिद्ध्युत्साहसिद्धिरूपाः । त्रयः = त्रय एव । इति = इत्थम् । व्याकर्तुम् = व्याख्यातुम् अलम् = समर्थाः । तत्रारिविजिगीष्वोर्व्यवस्थाकरणमैक्यं सन्धिः । विरोधः =विग्रहः । विजिगीषोररिं प्रति यात्रा यानम् । तयोर्मिथः प्रतिबद्धशक्त्योः कालप्रतीक्षया तूष्णीमवस्थानमासनम् । एकेन सह सन्धायापरेण सह विग्रहकरणं द्वैधीभावः । अथवा—दुर्बलप्रबलयोर्वाचिकमात्मसमर्पणं द्वैधीभावः । अरिणा पीड्यमानस्य बलवदाश्रयणं संश्रयः । कोशदुर्गदण्डोत्थं तेजः = प्रभावः ( प्रभुशक्तिः ) । कोशो = भाण्डागारः "खजाना" इति भाषायाम् । दुर्गः=प्राकारः चतुरङ्गबलं दण्डः । कर्त्तव्यार्थेषु स्थेयान्प्रयत्न उत्साहः । षड्गुणचिन्तनं मन्त्रः अन्यत् स्पष्टम् । अत्रानुष्टुब्वृत्तम् ।

समासः—दुष्टा मेधा येषां ते दुर्मेधसः ।

भावार्थः—बलराम उवाच—दुर्बुद्धयोऽपि शुक्रनीतिप्रभृतीन् ग्रन्थानधीत्य गुणाः षड् भवन्ति, शक्तयस्तिस्रो भवन्ति, सिद्धयश्च तिस्रो भवन्ति, उदयाश्च त्रयो भवन्तीति व्याख्यातुं प्रभवन्ति, परन्तु राजनीतेर्गूढरहस्यावगमस्तत्कथनञ्चातीव कठिनमस्ति ।

( ४३ ) प्रश्नः—

अनिर्लोडितकार्यस्य वाग्जालं वाग्मिनो वृथा ।
निमित्तादपराद्धेषोर्धानुष्कस्येव वल्गितम् ॥

इति पद्यं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारोल्लेखपूर्वकं देववाण्यां व्याख्येयम् । ( १९७८ )

उत्तरम्-सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति । अत्र बलरामः नीतिशास्त्र

टनेन किं प्रयोजनम्, सर्वथा कार्यतत्त्वमेवावगन्तव्यमित्येतद् दर्शयितुमाह—अनिर्लोडितकार्यस्येति ।

अन्वयः—अनिर्लोडितकार्यस्य वाग्मिनः वाग्जालं निमित्ताद् अपराद्धेषोः धानुष्कस्य वल्गितम् इव वृथा ।

व्याख्या—न निर्लोडितम् अनिर्लोडितम्, अनिर्लोडितं कार्यं येनासौ अनिर्लोडितकार्यः, तस्य अनिर्लोडितकार्यस्य=अनवलोकितकार्यस्य, कार्याकार्यम् अजानत इत्यर्थः । 'अनिर्लोठितकार्यस्ये'ति पाठेऽपि स एवार्थः । वाचोऽस्य सन्तीति वाग्मी, तस्य वाग्मिनः=वावदूकस्य, वाचालस्य । ( 'वाचो युक्ति पटुर्वाग्मी वावदूकोऽतिवक्तरि' इत्यमरः । ) वाचां जालं वाग्जालम्=वागाडम्बरः । निमित्तात्=लक्ष्यात् । ( 'वेध्यं लक्ष्यं निमित्तं च शरव्यं च समं विदुः' इति यादवः । ) अपराद्ध इषुर्यस्य सः अपराद्धेषुः, तस्य अपराद्धेषोः=स्खलितबाणस्य ( 'अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः' इत्यमरः ) । धनुः प्रहरणमस्य धानुष्कस्तस्य धानुष्कस्य=धनुष्मतः, धनुर्धरस्येत्यर्थः । ( 'धन्वी धनुष्मान् धानुष्कः' इत्यमरः । ) वल्गितमिव=वल्गनिकेव, आत्मश्लाघेव । वृथा=निरर्थकमेव । कार्यज्ञस्यैव वचनं ग्राह्यं, न तु वाचालस्येति भावः ।

समासः—न निर्लोडितम् अनिर्लोडितम्, अनिर्लोडितं कार्यं येनासौ अनिर्लोडितकार्यः, तस्य अनिर्लोडितकार्यस्य । वाचोऽस्य सन्तीति वाग्मी, तस्य वाग्मिनः । वाचां जालं वाग्जालम् । अपराद्ध इषुर्यस्य सः अपराद्धेषुः, तस्य अपराद्धेषोः । धनुः प्रहरणमस्य धानुष्कः, तस्य धानुष्कस्य ।

भावार्थः—कार्याकार्यमजानतो वाचालस्य वचनं लक्ष्यच्युतसायकस्य धनुर्धारिण आत्मश्लाघेव व्यर्थं भवति ।

( ४४ ) प्रश्नः—

सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम् ।
सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम् ॥

इति पद्यं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा विवृणुत । ( १९७९ )

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य 'शिशुपालवध'महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति । अत्र बलरामः षाड्गुण्यापाठमात्रं न मन्त्र इत्युक्त्वा स्वयं मन्त्रस्वरूपमाह—सर्वकार्यति ।

अन्वयः—सर्वकार्यशरीरेषु अङ्गस्कन्धपञ्चकं मुक्त्वा सौगतानाम् आत्मा इव महीभृताम् अन्यः मन्त्रः न अस्ति ।

व्याख्या—सर्वाणि च तानि कार्याणि सर्वकार्याणि, सर्वकार्याणि शरीराणीव सर्वकार्यशरीराणि, तेषु सर्वकार्यशरीरेषु=सर्वेषु शरीरेषु इव सर्वेषु सन्धिविग्रहादिषु कार्येषु। ('शरीरं वर्ष्म विग्रहः' इत्यमरः।) पञ्च एव पञ्चकम्, अङ्गानि स्कन्धा इव अङ्गस्कन्धाः, तेषां पञ्चकम् अङ्गस्कन्धपञ्चकम्=रूपादिस्कन्धपञ्चकमिव सहायाद्यङ्गपञ्चकम्। मुक्त्वा=परित्यज्य, त्यक्त्वा। सुगतो बुद्धः भजनीयः येषां सौगताः, तेषां सौगतानाम्=बौद्धानाम्। अन्यः=स्कन्धपञ्चकातिरिक्तः, आत्मा=क्षेत्रज्ञ इव। ('क्षेत्रज्ञ आत्मा पुरुषः' इत्यमरः।) महीभृताम्=राज्ञाम्। अन्यः=अङ्गपञ्चकातिरिक्तः। मन्त्रः=मन्त्रपदवाच्यः। नास्ति=न विद्यते। कर्मणामारम्भोपायः, पुरुषद्रव्यसम्पत्, देशकालविभागः, विपत्तिप्रकारः, कार्यसिद्धिश्चेति पञ्चाङ्गानि। उक्तञ्च कामन्दकेन—

'सहाया साधनोपायाः विभागो देशकालयोः।
विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते॥' इति॥

रूप-वेदना-विज्ञान-संज्ञा-संस्कारा पञ्चस्कन्धाः। तत्र विषयप्रपञ्चो रूपस्कन्धः, तज्ज्ञानप्रपञ्चो वेदनास्कन्धः, आलविज्ञानसन्तानो विज्ञानस्कन्धः, नामप्रपञ्चः संज्ञास्कन्धः, वासनाप्रपञ्चः संस्कारस्कन्धश्चेति। एवं पञ्चधा परिवर्तमानो ज्ञानसन्तान एवात्मेति बौद्धाः। यथा बौद्धानां सर्वेषु शरीरेषु स्कन्धपञ्चकं मुक्त्वाऽन्य आत्मा नास्ति तथा राज्ञामङ्गपञ्चकं मुक्त्वाऽन्यो मन्त्रो नास्तीत्युपमालङ्कारः। अत्रानुष्टुब्वृत्तम्।

समासः—सर्वाणि च तानि कार्याणि च सर्वकार्याणि, सर्वकार्याणि शरीराणीव सर्वकार्यशरीराणि, तेषु सर्वकार्यशरीरेषु, इति राजनीतिपक्षे विग्रहः। सौगतसिद्धान्तपक्षे—सर्वकार्याणीव सर्वशरीराणि, तेषु सर्वकार्यशरीरेषु। पञ्च एव पञ्चकम्, अङ्गानि स्कन्धा इव अङ्गस्कन्धाः, इति राजनीतिपक्षे। अन्यत्र—अङ्गानीव स्कन्धाः अङ्गस्कन्धाः, तेषां पञ्चकम् अङ्गस्कन्धपञ्चकम्। सुगतो भाक्तः=भजनीयः, येषां ते सौगताः, तेषां सौगतानाम्।

भावार्थः—बलराम उवाच—यथा बौद्धमते सर्वेषु रूपादिस्कन्धपञ्चकं परित्यज्यान्यः आत्मा नास्ति, किन्तु रूपादिस्कन्धपञ्चकमेवाऽऽत्माऽस्ति, तथैव समस्तकार्येषु राज्ञां सहायादिपञ्चाङ्गातिरिक्तोऽन्यः मन्त्रो नास्ति, किन्तु सहायादिपञ्चाङ्गा एव मन्त्राः सन्ति।

(४५) प्रश्नः—

मन्त्रो योध इवाधीरः सर्वाङ्गैः संवृतैरपि।
चिरं न सहते स्थातुं परेभ्यो भेदशङ्कया॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा व्याख्यायताम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति । अत्र बलरामः मन्त्रितार्थक्रियाविलम्बे दोषं वदति ।

अन्वयः— संवृतैः सर्वाङ्गैः ( उपलक्षितोऽपि ), मन्त्रः अधीरः योधः इव परेभ्यः भेदशङ्कया चिरं स्थातुं न सहते ।

व्याख्या — संवृतैः=गुप्तैः । क्वचित् कल्पितैरिति पाठस्तत्र सन्नद्धैरित्यर्थः । सर्वाणि तान्यङ्गानि सर्वाङ्गानि, तैः सर्वाङ्गैः=सहायादिभिः । अन्यत्र = उरःस्थलादिभिः सकलैरङ्गैः । उपलक्षितोऽपीत्यर्थः । सर्वाङ्गसंवृतोऽपीत्यर्थः । मन्त्रः=विचारः । ( "मन्त्रो वेदविशेषे स्याद् देवादीनां च साधने । गुह्यवादेऽपि च पुमान्" इति मेदिनी । ) न धीरः अधीरः=भीरुः । ("अधीरे कातरः" इत्यमरः । ) योध इव=भट इव । ( "भटा योधाश्च योद्धारः" इत्यमरः । ) परेभ्यः=अन्येभ्यः, अन्यत्र—शत्रुभ्यः । ( "पर दूरान्यमुख्येषु परोऽरिपरमात्मनोः" इति वैजयन्ती । ) भेदस्य शङ्का भेदशङ्का, तया भेदशङ्कया=विदारणशङ्कया, तृतीयजनकर्णगामित्वभयेन, अन्यावगमनशङ्कया च । चिरं=बहुकालम् । स्थातुं = वर्तितुम् । न सहते=न क्षमते, न समर्थः । अत्रानुष्टुब्वृत्तम् ।

समासः—सर्वाणि तानि अङ्गानि सर्वाङ्गानि, तैः सर्वाङ्गैः । भेदस्य शङ्का भेदशङ्का, तया भेदशङ्कया । युध्यते इति योधः । न धीरः अधीरः ।

भावार्थः—यथा भीरुर्योद्धा सर्वाङ्गसुरक्षितोऽपि शत्रुभ्यो विदारणशङ्कया युद्धे चिरं कालं स्थातुं न सहते, तथैव सहायादिसम्पूर्णैरङ्गैः सुरक्षितोऽपि मन्त्रः अन्येभ्यस्तृतीयजनकर्णगामित्वभयेन बहुकालं वर्तितुं न क्षमते ।

( ४६ ) प्रश्नः—

विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा ।
अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठते ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं देववाण्या व्याख्यायताम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति । अत्र बलरामः कथयति यत् सपत्नोच्छेदमन्तरेण प्रतिष्ठाऽपि दुर्लभेति ।

**अन्वयः**—विपक्षम् अखिलीकृत्य प्रतिष्ठा दुर्लभा खलु उदकं धूलिं पङ्कताम् अनीत्वा न अवतिष्ठते।

**व्याख्या**—विरुद्धः पक्षो यस्य सः विपक्षस्तं विपक्षम्=शत्रुम्। ("द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः" इत्यमरः।) न खिलम् अखिलम्, अखिलं खिलं सम्पद्यमानं कृत्वेति खिलीकृत्य, न खिलीकृत्य अखिलीकृत्य=उत्सन्नमकृत्वा, अनुन्मूल्येत्यर्थः। प्रतिष्ठा=अवस्थितिः, समादरः। दुर्लभा=दुष्प्रापा। खलु=निश्चयेन। उदकम्=जलम्। धूलिं=रेणुम्। ("रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः" इत्यमरः।) पङ्कस्य भावः पङ्कता, तां पङ्कताम्=कर्दमताम्, ("पङ्कोऽस्त्री शादकर्दमौ" इत्यमरः।) अनीत्वा=अप्राप्य, नाधःकृत्येत्यर्थः। न अवतिष्ठते=न तिष्ठति। किन्तु धूलिं पङ्कतां नीत्वैवोदकमवतिष्ठते इति भावः। अत्र पूर्वार्धोत्तरार्धयोर्बिम्बप्रतिबिम्बभावाद् दृष्टान्तालङ्कारः। तथा चोक्तं साहित्यदर्पणे—"दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्" इति। अत्रानुष्टुब्वृत्तम्।

**समासः**—विरुद्धः पक्षः यस्य सः विपक्षः (शत्रुः), तं विपक्षम्। न खिलम् अखिलम्, अखिलं खिलं सम्पद्यमानं कृत्वेति खिलीकृत्य, न खिलीकृत्य अखिलीकृत्य। दुःखेन लभ्यते इति दुर्लभा। पङ्कस्य भावः पङ्कता, ताम् पङ्कताम्।

**भावार्थः**—शत्रुं समूलमनुन्मूल्य प्रतिष्ठा दुष्प्रापा खलु, यतो हि धूलिं कर्दमतामनीत्वा जलं न तिष्ठति।

( ४७ ) **प्रश्नः**—

उपकर्त्राऽरिणा सन्धिर्न मित्रेणापकारिणा।
उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं देववाण्या व्याख्यायताम्।

**उत्तरम्**—**सन्दर्भः** प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति। अत्र बलरामः ननु चैद्यस्यास्मत्पैतृष्वसेयत्वेन सहजमित्रत्वात्सन्धानार्हत्वम्, न त्वभियानयोग्यत्वमित्यत आह—उपकर्त्रेति।

**अन्वयः**—उपकर्त्रा अरिणा (अपि) सन्धिः (कार्यः)। अपकारिणा मित्रेण अपि सन्धिः न कार्यः। हि उपकारापकारौ एतयोः लक्षणं लक्ष्यम्।

**व्याख्या**—उपकरोतीति उपकर्ता, तेन उपकर्त्रा=उपकारकारिणा। अरिणा=रिपुणा अपि। ("रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः" इत्यमरः।) सहजेन

प्राकृतेन चेति शेषः । सन्धिः=सन्धानम् । कार्यं इति शेषः । बलवत्या कृत्रिम-मित्रतयाऽरित्वस्य तत्र बाधान्मैत्री समुचितेति भावः । अपकारिणा=अप-कारकेण, द्रोहकारिणा । मित्रेण=सुहृदाऽपि । सहजेन प्राकृतेन वेति भावः । सन्धिः=मैत्री । न=नैव कार्यः, कृत्रिमशत्रुताया बलवत्त्वात्तत्र मैत्री न योग्ये-त्यर्थः । उक्तञ्च—

'यस्त्वमित्रेण सन्धत्ते मित्रेण च विरुध्यते ।
अर्थयुक्तिं समालोच्य स महद् विन्दते फलम् ॥' इति ॥

हि=यतः । उपक्रियते इत्युपकारः, अपक्रियते इत्यपकारः, उपकारश्च अप-कारश्च उपकारापकारौ=उपक्रियापक्रिये ( एव ) । एतयोः=मित्रामित्रयोः । लक्ष्यते अनेनेति लक्षणम्=स्वरूपम्, चिह्नम् । लक्ष्यम्=द्रष्टव्यम्, उपकारकमेव मित्रम्, अपकारकश्च शत्रुरिति भावः ।

समासः—उपकरोतीति उपकर्ता, तेन उपकर्त्रा । उपक्रियते इत्युपकारः, अपक्रियते इत्यपकारः, उपकारश्च अपकारश्च उपकारापकारौ । लक्ष्यते अनेनेति लक्षणम् ।

भावार्थः—उपकारकेणारिणाऽपि सन्धिः करणीयः, परन्तु अपकारकेण मित्रेणापि मैत्री न विधेया । उपकारापकारावेव मित्रामित्रयोर्लक्षणमव-गन्तव्यम् ।

( ४८ ) प्रश्नः—

त्वया विप्रकृतश्चैद्यो रुक्मिणीं हरता हरे ।
बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं संस्कृतभाषया व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति । अत्र पद्ये बलरामः चैद्यस्य शिशुपालस्य कृत्रिमशत्रुत्वमाह—त्वयेति ।

अन्वयः—हे हरे ! रुक्मिणीं हरता चैद्यः त्वया विप्रकृतः, ( तथाहि ) बद्धमूलस्य वैरतरोः स्त्रियः महत् मूलं हि ।

व्याख्या—हे हरे !=हे कृष्ण ! रुक्मिणीम्=भीष्मककन्याम्, रुक्मिस्व-सारम् । हरता=अपहरता, राक्षसधर्मेणोद्वहता । "राक्षसो युद्धहरणात्" इति याज्ञवल्क्यः ( आचाराध्याये ३।६१ ), "गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ" इति मनुः ( ३।२६ ) । त्वया=भवता श्रीकृष्णेन । चैद्यः=चेदिदेशा-

धिपः शिशुपालः। विप्रकृतः=विप्रियं प्रापितः, पराभूत इत्यर्थः। ( तथाहि ) बद्धं मूलं यस्य येन वाऽसौ बद्धमूलः, तस्य बद्धमूलस्य=रूढमूलस्य, दृढप्रतिष्ठस्य। वैरमेव तरुः वैरतरुः, तस्य वैरतरोः=विरोधवृक्षस्य। ("वैरं विरोधो विद्वेषः" इत्यमरः। "वृक्षो महीरुहः शाखी विटपी पादपस्तरुः। अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः" इत्यमरः। ) स्त्रियः=नार्यः। महत्=प्रधानम्। मूलम्=कारणम्। हि=इति निश्चितम्, निश्चयेऽव्ययमिदम्। अत्र "वैरतरोः" इत्यत्र रूपकालङ्कारः। किञ्च-पूर्वार्धोक्तस्य विशेषार्थस्योत्तरार्धोक्तेन सामान्यार्थेन समर्थनात् समान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः। अत्रानुष्टुब्वृत्तम्।

समासः—बद्धं मूलं यस्य येन वाऽसौ बद्धमूलः, तस्य बद्धमूलस्य। वैरमेव तरुः वैरतरुः, तस्य वैरतरोः।

भावार्थः—बलराम उवाच—हे श्रीकृष्ण! रुक्मिणीमपहरता भवता चेदिदेशाधिपः शिशुपाल विप्रकृतः, यतो हि रूढमूलस्य वैरवृक्षस्य स्त्रिय एव प्रधानं मूलं भवन्ति।

( ४९ ) प्रश्नः—

विराद्ध एवं भवता विराद्धा बहुधा च नः।
निर्वर्त्यतेऽरिः क्रियया स श्रुतश्रवसः सुतः॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वं देववाण्या व्याख्येयम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति। अत्र बलरामः शिशुपालः कृत्रिमशत्रुरेवेति समर्थयन्नाह—विराद्ध इति।

अन्वयः—एवं भवता विराद्धः बहुधा नः च विराद्धा। श्रुतश्रवसः सुतः सः क्रियया अरिः निर्वर्त्यते।

व्याख्या—एवम्=इत्थम्, पूर्वोक्तप्रकारेण। भवता=त्वया, भगवता श्रीकृष्णेन, विराध्यतेस्म, विराद्धः=विप्रकृतः। बहुधा=बहुप्रकारेण, अनेकधा। नः=अस्माकम्। विराध्यतीति विराद्धा=विप्रकर्ता, विरोधकर्ता। श्रुतश्रवसः=श्रुतश्रवाः नाम श्रीकृष्णस्य पितृष्वसा, तस्याः। सुतः=तनयः। ( आत्मजस्तनयः सूनुः सुतः पुत्रः" इत्यमरः। ) पैतृष्वसेयत्वात्सहजमित्रमपीति भावः। सः=शिशुपालः, क्रियया=परस्पराऽपकारेण। अरिः=कृत्रिमो रिपुः ( "रिपौ

वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः" इत्यमरः । ) निर्वर्त्यते=क्रियते । अत एव बलीयस्त्वादुपेक्षानर्हं इति भावः । अत्रानुष्टुब्वृत्तम् ।

समासः—विराध्यतेस्मेति विराद्धः । विराध्यतीति विराद्धा ।

भावार्थः—बलराम उवाच—हे श्रीकृष्ण ! एवं भवता यो विप्रकृतः, तथा च योऽस्माकं बहुधा विरोधकर्ता वर्तते, सः श्रुतश्रवसः पुत्रः स शिशुपालः अपमानरूपेण कार्येण कृत्रिमः शत्रुः क्रियते ।

( ५० ) प्रश्नः—

तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत् ।
हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम् ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति । अत्र बलरामः शत्रौ मार्दवमनर्थायेति स्पष्टीकुर्वन्नाह—तुल्येति ।

अन्वयः—स्वर्भानुः अपराधे तुल्ये अपि भानुमन्तं यत् चिरेण ग्रसते, हिमांशुम् आशु ( ग्रसते यत्, ) तत्, म्रदिम्नः फलं स्फुटम् ।

व्याख्या—स्वः=आकाशे भातीति स्वर्भानुः=राहुः । अपराधे=अपकारे । तुल्ये=समानेऽपि । भानवोऽस्य सन्तीति भानुमान्, तं भानुमन्तम्=दिवाकरम् । चिरेण=बहुकालेन । ग्रसते=गिलति । ("ग्रसितं गिलितं गीर्णम्" इत्यभिधानात् । ) हिमाः अंशव अस्यासौ हिमांशुस्तं=चन्द्रमसम्, आशु=शीघ्रम्, ( ग्रसते=गिलतीति ) यत्, तत्=एतत् । मृदोर्भावः म्रदिमा, तस्य म्रदिम्नः= मार्दवस्य । फलम्=परिणामः, ("सस्ये हेतुकृते फलम्" इत्यमरः ।) स्फुटम्= स्पष्टम् । तस्माद्विपक्षे तीव्रेण भवितव्यम् । अन्यथा मृदुः सर्वत्र पीड्यते । अत्र मृदोः सर्वत्र पीडनमिति प्रस्तुतमप्रस्तुतार्केन्दुकथनेन सारूप्यात्प्रतीयते इत्यप्रस्तुतप्रशंसालङ्कारः । "अप्रस्तुतस्य कथनात् प्रस्तुतं यत्र गम्यते । अप्रस्तुतप्रशंसेयं सारूप्याद्विनियन्त्रिता ॥" इति लक्षणात् । अत्रानुष्टुब्वृत्तम् ।

समासः—स्वः आकाशे भातीति स्वर्भानुः । भानवोऽस्य सन्तीति भानुमान्, तं भानुमन्तम् । हिमाः अंशव अस्यासौ हिमांशुः, तं हिमांशुम् । मृदोर्भावः म्रदिमा, तस्य म्रदिम्नः ।

**भावार्थः**—अपराधे तुल्येऽपि राहुः सूर्यं विलम्बेन कवलयति, चन्द्रमसं शीघ्रमेव ग्रसते, तत् मार्दवस्य स्पष्टं फलमस्ति।

( ५१ ) प्रश्नः—

स्वयं प्रणमतेऽल्पेऽपि परवायावुपेयुषी।
निदर्शनमसाराणां लघुर्बहुतृणं नरः॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं देववाण्या व्याख्येयम्।

**उत्तरम्**—**सन्दर्भः प्रसङ्गनिर्देशश्च**—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति। अत्र बलरामः प्रकारान्तरेण शत्रौ मार्दवमनर्थायेति समर्थयति।

**अन्वयः**—असाराणां निदर्शनं बहुतृणं लघुः नरः अल्पे अपि परवायौ उपेयुषि स्वयं प्रणमते।

**व्याख्या**—नास्ति सारो येषां ते असाराः, तेषाम् असाराणाम्=दुर्बलानाम्, ( "सारो बले स्थिरांशे च न्याये क्लीबं वरे त्रिषु" इत्यमरः। ) निदर्शनम्=दृष्टान्तः। ईषदसमाप्तं तृणं बहुतृणम्=तृणतुल्यः। (तृणशब्दात् ईषदसमाप्तेऽर्थे "विभाषा सुपो बहुच् पुरस्तात्तु" ( ५।३।६८ ) इति बहुच् प्रत्ययः। प्रकृतेः पूर्वं भवति "स्यादीषदसमाप्तौ तु बहुच्प्रकृतिलिङ्गके" इति वचनात् प्रकृतिलिङ्गता। ) लघुः=अतितुच्छः। नरः=पुरुषः ( "मनुष्याः मानुषा मर्त्या मनुजा मानवा नराः। स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः" इत्यमरः। ) अल्पेऽपि=स्वल्पेऽपि। परो वायुरिव परवायुः, तस्मिन् परवायौ। तृणपक्षे—पर इव वायुः परवायुस्तस्मिन् परवायौ=रिपुपतने, वायुतुल्ये वैरिणीत्यर्थः। उपेयुषि=प्राप्ते सति। स्वयम्=आत्मनैव। प्रणमते=नम्रीभवति। दुर्बलो जनः साधारणेनापि शत्रुणा वायुना तृणमिवानायासेन परिभूयते। अत एव बलमास्थेयम्। अत्रोपमालङ्कारः, अनुष्टुब्वृत्तम्।

**समासः**—नास्ति सारो येषां ते असाराः, तेषाम् असाराणाम्। नरपक्षे—परो वायुरिव परवायुः, तृणपक्षे=पर इव वायुः परवायुः, तस्मिन् परवायौ। ईषदसमाप्तं तृणं बहुतृणम्।

**भावार्थः**—दुर्बलानां दृष्टान्तः तृणतुल्योऽतितुच्छो मनुष्यः स्वल्पेऽपि शत्रुवाते सम्प्राप्ते सति स्वयमेव नमते।

( ५२ ) प्रश्नः—

हते हिडिम्बरिपुणा राज्ञि द्वैमातुरे युधि ।
चिरस्य मित्रव्यसनी सुदमो दमघोषजः ॥

इति पद्यं सप्रसङ्गं छन्दःकोशभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं देववाण्या विवृणुत ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति । अत्र वलरामः शत्रुः शिशुपालो सुखेन जेतुं शक्यत इत्याह—हते इति ।

अन्वयः—हिडिम्बरिपुणा द्वैमातुरे राज्ञि युधि हते ( सति ) चिरस्य मित्रव्यसनी दमघोषजः सुदमः ।

व्याख्या—हिडिम्बस्य रिपुः हिडिम्बरिपुः, तेन हिडिम्बरिपुणा=मध्यमपाण्डवेन भीमसेनेन । द्वयोर्मात्रोरपत्यं पुमान् द्वैमातुरः, तस्मिन् द्वैमातुरे=जरासन्धे । राज्ञि=भूपतौ, युधि=सङ्ग्रामे, मल्लयुद्धे इत्यर्थः । हते=मारिते सति । चिरस्य=चिरकालेन । ( "चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः" इत्यमरः । ) मित्रस्य व्यसनं मित्रव्यसनम्, तदस्यास्तीति मित्रव्यसनी=मित्रव्यसनवान्, मित्रभ्रंशवान् । ( "व्यसनं विपदि भ्रंशे" इत्यमरः । "अथ मित्रं सखा सुहृत्" इत्यमरः । दमघोषाज्जातः दमघोषजः=चैद्यः, शिशुपालः । सुदमः=सुखेन जेतुं शक्यः । एकाकित्वात् सुसाध्य इत्यर्थः । अत्रानुष्टुब्वृत्तम् ।

समासः—हिडिम्बस्य रिपुः हिडिम्बरिपुः, तेन हिडिम्बरिपुणा । द्वयोः मात्रोरपत्यं पुमान् द्वैमातुरः, तस्मिन् द्वैमातुरे । मित्रस्य व्यसनं मित्रव्यसनम्, तदस्यास्तीति मित्रव्यसनी । दमघोषाज्जातः दमघोषजः ।

भावार्थः—हिडिम्बशत्रुणा भीमसेनेन युद्धे जरासन्धे हते सति चिरकालेन मित्रमृत्युना दुःखी शिशुपालः सुखेन जेतुं शक्यते ।

( ५३ ) प्रश्नः—

अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितम् ।
सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं संस्कृतेन व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य

"शिशुपालवध"महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति। अत्र बलरामः कथयति यत् शिशुपालाभियाने शास्त्रचिन्ता न विधेयेति।

अन्वयः—उच्छृङ्खलं सत्त्वम् अन्यत् शास्त्रनियन्त्रितं (सत्त्वम्) अन्यत्। हि तेजस्तिमिरयोः सामानाधिकरण्यं कुतः ?

व्याख्या—उद्गता शृङ्खला यस्य तद् उच्छृङ्खलम्=अनर्गलम्। सत्त्वम्=बलम्, अन्यत्=अन्यादृशम्। शास्त्रेण मन्वादिशास्त्रेण नियन्त्रितमुदाहृतं, शास्त्रनियन्त्रितम्=मनुकामन्दकादिशास्त्रप्रतिपादितम्। परव्यसनकाले निर्मितमित्यर्थः। सत्त्वम्=बलम्। अन्यत्=भिन्नम्। दृष्टान्तमाह—हि=यतः। तेजश्च तिमिरं च ते तेजस्तिमिरे, तयोः तेजस्तिमिरयोः=प्रकाशान्धकारयोः। ("अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः" इत्यमरः।) समानम् अधिकरणं ययोस्ते समानाधिकरणे, तयोर्भावः सामानाधिकरण्यम्=एकाश्रयत्वम्, मिथुनीभाव इत्यर्थः। कुतः=कथं भवितुमर्हति? नैव भवितुमर्हतीति भावः। एतेन वयं तेजोरूपा नीतिशास्त्रं न मन्यामहे इति भावः। अत्रानुष्टुब्वृत्तम्।

समासः—उद्गता शृङ्खला यस्य तद् उच्छृङ्खलम्। शास्त्रेण नियन्त्रितं शास्त्रनियन्त्रितम्। तेजश्च तिमिरं च ते तेजस्तिमिरे, तयोः तेजस्तिमिरयोः। समानम् अधिकरणं ययोस्ते समानाधिकरणे, तयोर्भावः सामानाधिकरण्यम्।

भावार्थः—अनियन्त्रितं (असीमं) बलमन्यद् भवति, तथा च शास्त्रनियन्त्रितं बलं च भिन्नमेव भवति। अर्थादुभयोः साम्यं न भवितुमर्हति। यतो हि प्रकाशान्धकारयोरेकत्र स्थितिः कदापि न भवितुमर्हति। बलरामस्योक्तेरिदं तात्पर्यम्—यदस्माकं बलमपरिमितम्, अतश्शास्त्रचिन्तां परित्यज्यास्माभिः शिशुपालोऽभियातव्य इति।

(५४) प्रश्नः—

यजतां पाण्डवः स्वर्गमवत्विन्द्रस्तपत्विनः।
वयं हनाम द्विषतः सर्वः स्वार्थं समीहते॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वं देववाण्या व्याख्येयम्।

उत्तरम् सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति। अत्र बलरामः तत्काल शिशुपालं हन्तुमभियाने न चैतत् शङ्क्यम्, यदेवं सति युधिष्ठिर उपेक्षितो भवतीत्याह—यजतामिति।

अन्वयः—पाण्डवः यजताम्; इन्द्रः स्वर्गम् अवतु, इनः तपतु, वयम् द्विषतः हनाम, सर्वः स्वार्थं समीहते ।

व्याख्या—पाण्डवः=युधिष्ठिरः । यजताम्=यागं करोतु । इन्द्रः=पाकशासनः, ("इन्द्रो मरुत्वान् मघवा विडौजाः पाकशासनः । वृद्धश्रवाः सुनासीरः पुरुहूतः पुरन्दरः" इत्यमरः ।) स्वर्गं=दिवम् । अवतु=रक्षतु । इनः=भास्करः । ("इनः पत्यौ नृपार्कयोः" इति मेदिनी । ) तपतु=प्रकाशताम् । वयम्=यादवाः, द्विषतः=रिपून् । हनाम=मारयाम । (तथा हि ) सर्वः=सकलोऽपि जनः, स्वार्थं=स्वप्रयोजनम् । समीहते=अनुसन्धत्ते इच्छतीत्यर्थः । "प्रतीयते" इति पाठान्तरे प्रतिवद्यते, अनुतिष्ठतीत्यर्थः । अर्केन्द्रतुल्योऽस्माकं युधिष्ठिर इत्यर्थः, यथार्केन्द्रपार्था स्वकार्याण्यवतिष्ठमानाः परार्थं नापेक्षन्ते तथा वयमपि स्वकार्यमपेक्षामहे । न तेषामास्मास्कीनां चिन्ता नाप्यस्माकं तदीयेति भावः । अत्रार्थान्तरन्यासोऽलङ्कारः, अनुष्टुब्वृत्तम् ।

समासः—पाण्डोरपत्यं पाण्डवः । स्वस्य अर्थः स्वार्थस्तं स्वार्थम् ।

भावार्थः—श्रीबलराम उवाच—युधिष्ठिरो यज्ञं करोतु, इन्द्रो दिवं रक्षतु, सूर्यः तपतु, वयमपि शत्रून् मारयाम, यतो हि सर्वेऽपि स्वप्रयोजनमेव स्वार्थसाधनमेव वाञ्छन्ति ।

( ५५ ) प्रश्नः—

प्राप्यतां विद्युतां सम्पत्सम्पर्कादर्करोचिषाम् ।
शस्त्रैर्द्विषच्छिरश्छेदप्रोच्छलच्छोणितोक्षितैः ॥

इति पद्यं सप्रसङ्गं सवैशिष्ट्यं सुरगिरा व्याख्यायताम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति । अत्र बलरामः कर्तव्यं कमिति निर्दिशन्नाह—प्राप्यतामिति ।

अन्वयः—द्विषच्छिरश्छेदप्रोच्छलच्छोणितोक्षितैः, शस्त्रैः अर्करोचिषां सम्पर्कात् विद्युतां सम्पत् प्राप्यताम् ।

व्याख्या—द्विषतां शिरांसि द्विषच्छिरांसि, तेषां छेदः द्विषच्छिरश्छेदः, तेन प्रोच्छलच्च तच्छोणितं च द्विषच्छिरश्छेदप्रोच्छलच्छोणितम्, तेन उक्षितानि, तैः द्विषच्छिरश्छेदप्रोच्छलच्छोणितोक्षितैः=रिपुमस्तकच्छेदोद्गच्छद्रुधिरसिक्तैः । ("रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम्" इत्यमरः । ) शस्त्रैः=प्रहरणैः । ("आयुधं तु प्रहरणं शस्त्रमस्त्रमथाऽस्त्रियौ" इत्यमरः ।) अर्कस्य=भास्करस्य,

रोचींषि अर्करोचींषि, तेषाम् अर्करोचिषाम्=भास्करातपानाम्। ("रोचिः शोचिरुभे क्लीवे प्रकाशो द्योत आतपः" इत्यमरः।) सम्पर्कात्=सम्बन्धात्। विद्युताम्=सौदामनीनाम्। ("शम्पाशतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा। तडित्सौदामनी विद्युच्चञ्चला चपला अपि" इत्यमरः।) सम्पत्=लक्ष्मीः। प्राप्यताम्=लभताम्। अत्र निदर्शनालङ्कारः, अनुष्टुव्वृत्तम्।

समासः—द्विषतां शिरांसि द्विषच्छिरांसि, तेषां छेदः द्विषच्छिरश्छेदः, तेन प्रोच्छलच्च तच्छोणितं च द्विषच्छिरश्छेदप्रोच्छलच्छोणितम्, तेन उक्षितानि, तैः द्विषच्छिरश्छेदप्रोच्छलच्छोणितैः। अर्कस्य रोचींषि अर्करोचींषि, तेषाम् अर्करोचिषाम्।

भावार्थः—श्रीवलराम उवाच—युद्धे शत्रूणां मस्तकच्छेदनेनोद्गच्छद्रक्त संसिक्तान्यस्मच्छस्त्राणि सूर्यकिरणसंयोगाद् विद्युच्छोभां लभन्ताम्।

(५६) प्रश्नः—

प्रज्ञोत्साहावतः स्वामी यतेताधातुमात्मनि।
तौ हि मूलमुदेष्यन्त्याः जिगीषोरात्मसम्पदः॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वं सुरगिरा व्याख्येयम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति। पूर्वं युधिष्ठिरस्य यज्ञ भागं ग्रहीतुं गन्तव्यम्, शिशुपालो वाऽभियातव्य इति विषये प्रचलितायां मन्त्रणायां वृहस्पतिशिष्य उद्धवः स्वमतं दर्शयन्नाह—प्रज्ञोत्साहेति।

अन्वयः—अतः स्वामी प्रज्ञोत्साहौ आत्मनि आधातुं यतेत। हि तौ उदेष्यन्त्याः जिगीषोः आत्मसम्पदः मूलम्।

व्याख्या—अतः=अस्मात् कारणात्। स्वामी=प्रभुः, राजा। ("स्वामी प्रभुविशाखयोः" इति विश्वः।) प्रकर्षेण जानात्यनयेति प्रज्ञा, प्रज्ञा चोत्साहश्चेति प्रज्ञोत्साहौ=मन्त्रोत्साहशक्ती। ("बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः प्रेक्षोपलब्धिश्चित्संवित् प्रतिपज्ज्ञप्तिचेतनाः" इत्यमरः। "उत्साहोऽध्यवसायः स्यात्" इत्यमरः।) आत्मनि=स्वस्मिन्। आधातुं=सम्पादयितुम्। यतेत=यत्नं कुर्यात्, स्वयमुभयशक्तिमान् भवेदित्यर्थः। हि=यतः। तौ=प्रज्ञोत्साहौ उदेष्यन्त्याः=वर्त्स्यन्त्याः। जेतुमिच्छति जिगीषुः, तस्य जिगीषोः=विजिगीषोः राज्ञः। द्वादशराजमण्डलीनामभिगतो राजा विजिगीषुः। आत्मनः सम्पद् आत्म

त्पत्, तस्या आत्मसम्पदः = प्रभुशक्तेः । मूलम् = निदानम् । यथोत्साहस्तथा ज्ञोऽपि ग्राह्यो, न केवलमुत्साह इति बलभद्रमतखण्डनम् । अत्रानुष्टुब्वृत्तम् ।

समासः—प्रकर्षेण जानाति अनयेति प्रज्ञा, प्रज्ञा चोत्साहश्चेति प्रज्ञोत्साहौ, प्रज्ञोत्साहौ । आत्मनः सम्पत् आत्मसम्पत्, तस्य आत्मसम्पदः । जेतुमिच्छति जिगीषुः, तस्य जिगीषोः ।

भावार्थः—स्वमतं प्रकटयन्नुद्धव उवाच—अतः विजयाभिलाषी राजा बुद्धिपराक्रमावात्मन्याधातुं यत्नं कुर्यात्, यतो हि प्रज्ञोत्साहावेव ( बुद्धिपराक्रमावेव ) विजयाभिलाषिणो राज्ञः वर्धमानायाः प्रभुशक्तेर्मूलभूतौ स्तः ।

( ५७ ) प्रश्नः—

आरभन्तेऽल्पमेवाऽज्ञाः कामं व्यग्रा भवन्ति च ।
महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं विवरण्या व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति । अत्र पद्ये उद्धवः प्रकारान्तरेण प्रज्ञाप्रज्ञयोर्भेदं दर्शयति ।

अन्वयः—अज्ञाः अल्पम् एव आरभन्ते कामं व्यग्राश्च भवन्ति कृतधियः महारम्भाः ( भवन्ति ), निराकुलाः च तिष्ठन्ति ।

व्याख्या—जानन्तीति ज्ञाः, न ज्ञाः अज्ञाः = मूर्खाः । अल्पं = तुच्छमेव । आरभन्ते = प्रक्रमन्ते । कामम् = अत्यन्तम् । विगतम् अग्रं येषां ते व्यग्राश्च = व्याकुलिताश्च । भवन्ति = जायन्ते । न च पारं गच्छन्तीति भावः । ( किन्तु— ) कृता = शिक्षिता, शास्त्रेण वर्धिता वा धीर्बुद्धिर्येषां ते कृतधियः = शिक्षितबुद्धयः, आरभ्यन्ते इति आरम्भाः, महान्त आरम्भाः येषां ते महारम्भाः = महोद्योगाः; तिष्ठन्ति । आकुलेभ्यो निर्गताः निराकुलाः = अव्यग्राश्च तिष्ठन्ति । पारं गच्छन्तीति भावः । अत्रानुष्टुब्वृत्तम् ।

समासः—जानन्तीति ज्ञाः, न ज्ञाः अज्ञाः । विगतम् अग्रं येषां ते व्यग्राः । आरभ्यन्ते इति आरम्भाः, महान्तः आरम्भाः येषां ते महारम्भाः । कृता = शिक्षिता, शास्त्रेण वर्धिता वा धीर्येषां ते कृतधियः । आकुलेभ्यो निर्गताः निराकुलाः ।

भावार्थः— उद्धव उवाच—मूर्खाः तुच्छमेव कार्यमारभन्ते, अत्यन्तं व्याकुलाश्च जायन्ते। परन्तु सुशिक्षितधियः पुरुषा महोद्योगाः भवन्ति, निराकुलाश्च भवन्ति, कार्येषु साफल्यञ्चावाप्नुवन्ति।

( ५८ ) प्रश्नः—

सहिष्ये शतमागांसि सूनोस्ते इति यत्त्वया।
प्रतीक्ष्यं तत्प्रतीक्ष्यायै पितृस्वस्रे प्रतिश्रुतम्॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारप्रदर्शनपूर्वं सुरगिरा व्याख्येयम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति। अत्र पद्ये उद्धवः श्रीकृष्णं तव पितृस्वसुः समक्षं "ते पुत्रस्य शतमपराधान् सहिष्ये" इति विहितां प्रतिज्ञां स्मारयति।

अन्वयः—प्रतीक्ष्यायै पितृस्वस्रे "ते सूनोः शतम् आगांसि सहिष्ये" इति यत् त्वया प्रतिश्रुतं तत् प्रतीक्ष्यम्।

व्याख्या—प्रतीक्ष्यते या सा प्रतीक्ष्या, तस्यै प्रतीक्ष्यायै=पूज्यायै। ( 'पूज्यः प्रतीक्ष्यः' इत्यमरः। ) पितुः स्वसा पितृस्वसा, तस्यै पितृस्वस्रे=पितृभगिन्यै शिशुपालजनन्यै सात्वत्यै ( "भगिनी स्वसा" इत्यमरः। )। ते=तव। सूनोः=पुत्रस्य। शतम्=शतसङ्ख्याकानि। आगांसि=अपराधान्। ( "आगोऽपराधो मन्तुश्च" इत्यमरः। ) सहिष्ये=क्षमिष्ये। इति=एवम्। यत्=यद्धि। त्वया=श्रीकृष्णेन, प्रतिश्रुतम्=प्रतिज्ञातम्, तत्=तदपि। प्रतीक्ष्यम्=प्रतिपालनीयम्। अन्यथा महादोषस्मरणादिति भावः। "सूनोस्ते इति यत् त्वया" इत्यस्य स्थाने "प्रत्यश्रौषीः किलेति यत्" इति पाठान्तरम्। तत्र—प्रत्यश्रौषीः=अङ्गीकृतवान्। किलेति सत्ये। इति क्रियान्तरसम्बन्धे वाक्यार्थपरामर्शकः। अत्रानुष्टुब्वृत्तम्।

समासः—प्रतीक्ष्यते या सा प्रतीक्ष्या, तस्यै प्रतीक्ष्यायै। पितुः स्वसा पितृस्वसा, तस्यै पितृस्वस्रे।

भावार्थः—उद्धव उवाच—हे श्रीकृष्ण! तत्कालमेव शिशुपालाभियाने एकापरा च बाधाऽस्ति यद् भवता स्वपूज्यायै पितृस्वस्रे—"तव पुत्रस्य शतमपराधान् क्षमिष्ये" इति यत् प्रतिज्ञातं तदपि भवता प्रतिपालनीयम्।

( ५६ ) प्रश्नः—

अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना ।
शब्दविद्येव नो भाति राजनीतिरपस्पशा ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं संस्कृतभाषया व्याख्यायताम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य द्वितीयसर्गादुद्धृतमस्ति । अत्रोद्धवः कथयति यद् राजभिर्गुप्तचरनियुक्तिरवश्यमेव विधेयेति ।

अन्वयः—अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना राजनीतिः अपस्पशा, शब्दविद्या इव नो भाति ।

व्याख्या—सूत्राणि उत्क्रान्तः उत्सूत्रः, न उत्सूत्रः अनुत्सूत्रः, पदानां न्यासः पदन्यासः, अनुत्सूत्रः पदन्यासः यस्यां सा अनुत्सूत्रपदन्यासा=नीतिशास्त्रविरुद्ध-कल्पतमव्यवहारशून्या; नीतिपूर्वकसकलव्यवहारा । यत् यस्य पुरुषस्य ग्रामादेर्वा स्थानमर्थशास्त्रैर्निर्दिष्टं तत्तत्रैव यस्यां निर्दिष्टमित्यर्थः । शब्दविद्या-पक्षे—सूत्राणि उत्क्रान्तानि उत्सूत्राणि, न उत्सूत्राणि अनुत्सूत्राणि, तानि पदानि यस्मिन् सः अनुत्सूत्रपदः, अनुत्सूत्रपदः न्यासो यस्यां सा अनुत्सूत्रपदन्यासा= अनुत्सूत्राक्षरन्यासाख्यव्याख्याग्रन्थविशेषोपेता, सूत्रार्थप्रतिपादनपरकवृत्तिव्याख्या-भूतन्यासालङ्कृता । सती वृत्तिर्यस्यां सा सद्वृत्तिः=शोभनभृत्यामात्यादि-जीविकायुता । शब्दविद्यापक्षे—सद्वृत्तिः=काशिकादिशोभनवृत्तिग्रन्थोपेता । ("वृत्तिः ग्रन्थजीवनयोः" इति वैजयन्ती । ) निबध्यतेऽनेनेति निबन्धनम्, सत् निबन्धनं यस्यां सा सन्निबन्धना=कार्यसमाप्तौ अनुजीविभ्यो दत्तगोहिरण्यादि पारितोषिकसहिता । अन्यत्र सन्निबन्धना=शोभनमहाभाष्याख्यनिबन्धसहिता । राज्ञां नीतिः राजनीतिः=राजवृत्तिः, अपगतः स्पशो यस्यां साऽपस्पशा= चररहिता । शब्दविद्यापक्षे—अविद्यमानः पस्पशो यस्यां साऽपस्पशा=पस्प-शाह्निकरहिता,शास्त्रारम्भसमर्थकोपोद्घातसन्दर्भरहिता । ("यथार्थवर्णो मर्मज्ञः प्रोहरक उच्यते" इति हलायुधः । "यथार्थवर्णः प्रणिधिरपसर्पश्चरः स्पशः । चारश्च गूढपुरुषः" इति चामरः । ) शब्दानां विद्या शब्दविद्या=व्याकरण-शास्त्रविद्या, इव=यथा । नो भाति=न शोभते । तथा चोक्तम्—

सर्वस्यैव शास्त्रस्य कर्मणो वाऽपि कस्यचित् ।
यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते ॥ इति ॥

तस्माद् गुप्तचरप्रेषणमनिवार्यम्। तद्विना राज्ञोऽन्धप्रायत्वादिति भावः। अत्रापस्पशेत्यत्र जतुकाष्ठन्यायेन शब्दयोः श्लिष्टत्वाच्छब्दश्लेषः। सद्वृत्तिः सन्नि-बन्धनेत्यत्रैकवृन्तावलम्बिफलद्वयवदर्थश्लेषः। अनुत्सूत्रपदन्यासेत्यत्र तूभयथा-सम्भवादुभयश्लेषः शब्दविद्येवेति पूर्णोपमा च। सा च प्रधानेति तेषामङ्गाङ्गि-भावेन सङ्करालङ्कारः। अत्रानुष्टुब्वृत्तम्।

समासः—सूत्राणि उत्क्रान्तः उत्सूत्रः, न उत्सूत्रः अनुत्सूत्रः, पदानां न्यासः पदन्यासः, अनुत्सूत्रः पदन्यासः यस्यां सा अनुत्सूत्रपदन्यासा। शब्दविद्यापक्षे—सूत्राणि उत्क्रान्तानि उत्सूत्राणि, न उत्सूत्राणि अनुत्सूत्राणि, तानि पदानि यस्मिन् सः अनुत्सूत्रपदः, अनुत्सूत्रपदः न्यासो यस्यां सा अनुत्सूत्रपदन्यासा। सती वृत्तिर्यस्यां सा सद्वृत्तिः। निबध्यतेऽनेनेति निबन्धनम्, सत् निबन्धनं यस्यां सा सन्निबन्धना। राज्ञां नीतिः राजनीतिः। अपगतः स्पशो यस्यां साऽपस्पशा। शब्दविद्यापक्षे—अविद्यमानः पस्पशो यस्यां सा अपस्पशा। शब्दानां विद्या शब्दविद्या।

भावार्थः—राजभिर्गुप्तचरनियुक्तिरवश्यमेव विधेयेति कथयत्युद्धवः—नीति-शास्त्रविरुद्धं स्वल्पमपि व्यवहारो यत्र न कर्तुं शक्यते, भृत्यानां कृते यत्रोत्तम-जीविकायाः व्यवस्थाऽस्ति, कार्यसमाप्तौ च भृत्यानां कृते यत्रोत्तमपारितोषिक-व्यवस्था वर्तते, तादृशी राजनीतिरपि गुप्तचररहिता तथैव न फलीभूता भवति, यथा सूत्रार्थप्रतिपादकन्यासग्रन्थयुक्ता, शोभनकाशिकावृत्तिशोभनमहाभाष्याख्य-निबन्धशोभिताऽपि व्याकरणविद्या पस्पशाह्निकमन्तरेण न शोभते। [पस्पशाह्निकं व्याकरणमहाभाष्यस्य प्रथमाध्यायस्य प्रथमाह्निकमस्ति, यत्र व्याकरणशास्त्रस्या-ऽध्ययनप्रयोजनानाम्—"रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" इत्येवं रूपेण प्रतिपादनं विहितम्। ]

॥ इति द्वितीयः सर्गः॥

---

## तृतीयः सर्गः

( ६० ) प्रश्नः—

कौबेरदिग्भागमपास्य मार्गमागस्त्यमुष्णांशुरिवावतीर्णः ।
अपेतयुद्धाभिनिवेशसौम्यो हरिर्हरिप्रस्थमथ प्रतस्थे ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य तृतीयसर्गादुद्धृतमस्ति । अत्र कविः भगवतः श्रीकृष्णस्य हस्तिनापुरं प्रति प्रस्थानं वर्णयति ।

अन्वयः—अथ अपेतयुद्धाभिनिवेशसौम्यः ( अत एव ) कौबेरदिग्भागम् अपास्य आगस्त्यं मार्गम् अवतीर्णः उष्णांशुः इव ( स्थितः ) हरिः हरिप्रस्थं प्रतस्थे ।

व्याख्या—अथ = उद्धववचनश्रवणानन्तरम् । युद्धस्य अभिनिवेशः युद्धाभिनिवेशः, अपेतः युद्धाभिनिवेशो यस्य सः अपेतयुद्धाभिनिवेशः, स चासौ सौम्यश्च अपेतयुद्धाभिनिवेशसौम्यः = शान्तक्रोधः, निवृत्तयुद्धाग्रहत्वादित्यर्थः । उक्तं हि पूर्वम्—"आसीत् कार्यद्वयाकुलः" इति । सम्प्रति तु शान्तक्रोधत्वात्प्रसन्न इति भावः । ( अत एव ) कुवेरस्येयं कौबेरी, कौबेरी चासौ दिक् चेति कौबेरदिक्, तस्याः भागस्तं कौबेरदिग्भागम् = उत्तरायणमित्यर्थः । ( "अयने वर्त्मंमार्गाध्वपन्थानः पदवी सृतिः । सरणिः पद्धतिः पद्या वर्तन्येकपदीति च" इत्यमरः । ) अपास्य = त्यक्त्वा । अगस्त्यस्यायमागस्त्यः, तम् आगस्त्यम् = अगस्त्यर्षिसेवितम् । मार्गं = दक्षिणायनमित्यर्थः । अवतीर्णः = प्राप्तः । दक्षिणायनं गत इति भावः । उष्णांशुरिव = भास्कर इव ( स्थितः ) । अनेन यथा सूर्ये दक्षिणायनं प्राप्ते सति तत्तेजः सह्यं भवति, परमुत्तरायणप्राप्त्यनन्तरं तु तदसह्यमेव भविष्यति, तथैव श्रीकृष्णस्य क्रोधोऽपि कार्यवशात् कियत्कालपर्यन्तं शान्तो जातं न त्वेकान्ततो निवृत्त इति ध्वनितम् । हरिः = भगवान् श्रीकृष्णः । ( "इन्द्रो दुश्च्यवनो हरिः" इति हलायुधः । ) हरिप्रस्थं = इन्द्रप्रस्थम्, प्रतस्थे = प्रचचाल । अत्रोपमालङ्कारः, इन्द्रवज्रोपेन्द्रवज्रामिश्रणादुपजातिवृत्तम् ।

समासः—कुबेरस्येयं कौबेरी, कौबेरी चासौ दिक् चेति कौबेरदिक्, तस्याः भागस्तं कौबेरदिग्भागम् । अगस्त्यस्यायमागस्त्यः, तम् आगस्त्यम् । युद्धस्य

अभिनिवेशः युद्धाभिनिवेशः, अपेतः युद्धाभिनिवेशः यस्य सः, अपेतयुद्धाभिनिवेशः, स चासौ सौम्यश्च अपेतयुद्धाभिनिवेशसौम्यः।

भावार्थः—उद्धववचनश्रवणानन्तरं निवृत्तयुद्धरसिकत्वनिराकुलः शान्तक्रोधत्वात्प्रसन्नः, उत्तरायणम्परित्यज्य दक्षिणायनम्प्राप्तः सूर्य इव सह्यतेजो भगवान् श्रीकृष्णो हस्तिनापुरं प्रति प्रतस्थे।

( ६१ ) प्रश्नः—

चित्राभिरस्योपरि मौलिभाजां भाभिर्मणीनामनणीयसीभिः।
अनेकधातुच्छुरिताश्मराशेर्गोवर्धनस्याकृतिरन्वकारि ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा व्याख्येयम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य तृतीयसर्गादुद्धृतमस्ति। अत्र कविः भगवतः श्रीकृष्णस्य प्रसाधनविधिं निरूपयन् मुकुटधारणं वर्णयति।

अन्वयः—अस्य उपरि मौलिभाजां मणीनाम् अनणीयसीभिः चित्राभिः भाभिः अनेकधातुच्छुरिताश्मराशेः गोवर्धनस्य आकृतिः अन्वकारि।

व्याख्या—अस्य = भगवतः श्रीकृष्णस्य, उपरि = ऊर्ध्वदेशे। मौलिं भजन्तीति मौलिभाजस्तेषां मौलिभाजाम् = भृकुटगतानाम्। मणीनाम् = रत्नानाम्, मरकतपद्मरागादीनामित्यर्थः। ( "रत्नं मणिर्द्वयोः" इत्यमरः। ) अनणीयसीभिः = महतीभिः। चित्राभिः = अनेकवर्णाभिः। भाभिः = प्रभाभिः। अनेके च ते धातवश्चेति अनेकधातवः, अश्मनां राशयः अश्मराशयः, अनेकधातुभिः छुरिता अश्मराशयो यस्य सः, तस्य अनेकधातुच्छुरिताश्मराशेः = नानाविधगैरिकमनःशिलादिधातुमिश्रितप्रस्तरसमूहस्य ("पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृशत्" इत्यमरः। ) गोवर्धनस्य = एतन्नामकपर्वतस्य। आकृतिः = आकारम्, स्वरूपं, सादृश्यमित्यर्थः। अन्वकारि = अनुकृता। सादृश्यं धृतमित्यर्थः। अत्रोपमालङ्कारः, उपजातिश्छन्दः।

समासः—मौलिं भजन्तीति मौलिभाजः, तेषां मौलिभाजाम्। अनेके च ते धातवश्चेति अनेकधातवः, अश्मनां राशयः अश्मराशयः, अनेकधातुभिः छुरिता अश्मराशयो यस्य सः, तस्य अनेकधातुच्छुरिताश्मराशेः।

भावार्थः—मुकुटावबद्धानां रत्नानां महतीभिरनेकवर्णाभिर्मरीचिभिर्भूषितेन भगवता श्रीकृष्णेनानेकधातुच्छुरिताश्मराशेर्गोवर्धनस्याकृतिरन्वकारि।

( ६२ ) प्रश्नः—

उभौ यदि व्योम्नि पृथक् प्रवाहावाकाशगङ्गापयसः पतेताम् ।
तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भसमासविग्रहालङ्कारभावार्थसहितं कृतगिरा व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य शिशुपालवध"महाकाव्यस्य तृतीयसर्गादुद्धृतमस्ति । अत्र कविः भगवतः कृष्णस्य मुक्ताहारधारणं वर्णयति ।

अन्वयः—तमालनीलम् आमुक्तमुक्तालतम् अस्य वक्षः आकाशगङ्गापयसः शौ प्रवाहौ व्योम्नि पृथक् पतेतां यदि तेन उपमीयेत ।

व्याख्या—तमाल इव नीलं तमालनीलम्=तमालाख्यतरुवन्नीलवर्णम् । मुक्ते च ते मुक्तालते आमुक्तमुक्तालते, ते स्तः यस्मिन् तत् आमुक्तमुक्तालतम्= सञ्जितमुक्ताहारम्, बद्धमौक्तिकहारम्, अस्य=भगवतः श्रीकृष्णस्य । वक्षः =उरः, आकाशस्य गङ्गा आकाशगङ्गा, तस्याः पयः आकाशगङ्गापयः, तस्य काशगङ्गापयसः=स्वर्गनदीजलस्य । उभौ=द्वौ । प्रवाहौ=स्रोतसी । "प्रवाहस्तु प्रवृत्तौ स्यादपि स्रोतसि वारिणः" इत्यमरः । ) व्योम्नि= काशे । पृथक्=भिन्नौ, विश्लिष्टौ पतेताम्=प्रवहेताम् । यदि=चेत् । तेन =आकाशेन । उपमीयेत=सदृशीक्रियेत । नास्योपमानं किञ्चित् पश्याम इति वः । अत्र व्योमगङ्गाप्रवाहद्वयासम्बन्धेऽपि सम्भावनायां सम्बन्धकथनादति- शोक्तिरलङ्कारः । उपजातिश्छन्दः ।

समासः—तमाल इव नीलं तमालनीलम् । आमुक्ते च ते मुक्तालते मुक्तमुक्तालते, ते स्तः यस्मिन् तत् आमुक्तमुक्तालतम् । आकाशस्य गङ्गा काशगङ्गा, तस्याः पयः आकाशगङ्गापयः, तस्य आकाशगङ्गापयसः ।

भावार्थः—तमालवृक्षवच्छ्यामवर्णस्य मुक्ताहारं च धारयतो भगवतः कृष्णस्य वक्ष आकाशगङ्गायाः प्रवाहद्वयमाकाशे यदि उभयतः पृथक् पतेत हि तेनाकाशेन सदृशीकर्तुं शक्यते । अर्थात् भगवान् श्रीकृष्णो मुक्ताहारं रयामास ।

( ६३ ) प्रश्नः—

तेनाम्भसां सारमयः पयोधेर्दध्रे मणिर्दीधितिदीपिताशः ।
अन्तर्वसन्बिम्बगतस्तदङ्गे साक्षादिवालक्ष्यत यत्र लोकः ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशसहित देववाण्यां व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य तृतीयसर्गादुद्धृतमस्ति । अत्र कविः भगवतः श्रीकृष्णस्य कौस्तुभमणिधारणं वर्णयति ।

अन्वयः—तेन दीधितिदीपिताशः पयोधेः अम्भसां सारमयः मणिः दध्रे यत्र बिम्बगतः लोकः तदङ्गे साक्षात् अन्तर्वसन् इव अलक्ष्यत ।

व्याख्या—तेन=भगवता श्रीकृष्णेन । दीधितिभिः दीपिता आशा येन सः दीधितिदीपिताशः=स्वमरीचिप्रकाशितकाष्ठः, दिगन्तविश्रान्ततेज इत्यर्थः । ( "भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम्" इत्यमरः । ) पयोधेः=समुद्रस्य । अम्भसां=जलानाम् । सारमयः=सारस्य विकारः सारमय अथवा प्रधानभूतः । मणिः=समुद्रमन्थनोत्थः कौस्तुभमणिः । दध्रे=धृतः । यत्र=मणौ । विम्बं गतः विम्बगतः=प्रतिविम्बगतः, प्रतिबिम्बित इत्यर्थः । लोकः=बाह्यप्रपञ्चः, तदङ्गे=श्रीकृष्णशरीरे । साक्षात्=वहिःप्रत्यक्षेण लक्ष्यमाण इत्यर्थः । ( "साक्षात् प्रत्यक्ष तुल्ययोः" इत्यमरः । ) अन्तर्वसन्=अन्तर्गतः लोक इव=जगदिव, अलक्ष्यत=अदृश्यत । अत्र कौस्तुभमणौ प्रतिबिम्बित बाह्यलोकस्तदङ्गे एव प्रतिफलित, कुक्षिस्थलोक इवादृश्यतेत्यर्थः इत्युत्प्रेक्षा लङ्कारः । उपजातिश्छन्दः ।

समासः—दीधितिभिः दीपिता आशा येन सः दीधितिदीपिताशः । बिम्बं गतो बिम्बगतः ।

भावार्थः—भगवान् श्रीकृष्णः स्वमरीचिभिर्दीपिताशः समुद्रस्य जलानां सारमयं कौस्तुभमणिं धारयामास । यत्र प्रतिबिम्बितं बाह्यं जगत् अन्तर्गतं लोक इवादृश्यत ।

( ६४ ) प्रश्नः—

स इन्द्रनीलस्थलनीलमूर्ती रराज कर्चूरपिशङ्गवासाः ।
विसृत्वरैरम्बुरुहां रजोभिर्यमस्वसुश्चित्र इवोदमारः ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वं संस्कृतेन व्याख्यायताम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य तृतीयसर्गादुद्धृतमस्ति । अत्र कविः भगवतः श्रीकृष्णस्य पीतवस्त्रधारणं वर्णयति ।

अन्वयः—इन्द्रनीलस्थलनीलमूर्तिः कर्चूरपिशङ्गवासाः सः विसृत्वरैः, अम्बुरुहां रजोभिः चित्रः यमस्वसुः उदभारः इव रराज।

व्याख्या—नीला चासौ मूर्तिश्च नीलमूर्तिः, इन्द्रनीलस्य स्थलम् इन्द्रनील-स्थलम्, इन्द्रनीलस्थलमिव नीलमूर्तिः यस्य सः इन्द्रनीलस्थलनीलमूर्तिः= असितमणिकुट्टिमश्यामदेहः। पुनः कथम्भूतः—कर्चूरमिव पिशङ्गवासो यस्य सः कर्चूरपिशङ्गवासाः=हरितालवत् पीताम्बरः। ("हरितालं तु कर्चूरम्" इति वैजयन्ती।) सः=श्रीकृष्णः। विसृत्वरैः=प्रसरणशीलैः। अम्बुरुहाम्= कमलानाम्। रजोभिः=परागैः। चित्रः=चित्रवर्णः। यमस्य स्वसा यमस्वसा, तस्याः यमस्वसुः=यमुनायाः। उदकस्य भारः उदभारः=जलराशिः। इव= यथा। रराज=शुशुभे। स पीतवस्त्रं दधारेति भावः। अत्रोपमालङ्कारः। उपजातिश्छन्दः।

समासः—नीला चासौ मूर्तिश्च नीलमूर्तिः, इन्द्रनीलस्य स्थलम् इन्द्रनील-स्थलम्, इन्द्रनीलस्थलमिव नीलमूर्तिः यस्य सः इन्द्रनीलस्थलनीलमूर्तिः। कर्चूर-मिव पिशङ्गं वासो यस्य सः कर्चूरपिशङ्गवासाः। यमस्य स्वसा यमस्वसा, तस्याः यमस्वसुः। उदकस्य भारः उदभारः।

भावार्थः—इन्द्रनीलमणिस्थलवत् श्यामदेहः, हरितालवत् पीताम्बरधारी सः भगवान् श्रीकृष्णः प्रसरणशीलैः कमलपरागैः चित्रवर्णयमुनाजलराशि-वच्छुशुभे।

(६५) प्रश्नः—

प्रसाधितस्यास्य मधुद्विषोऽभूदन्यैव लक्ष्मीरिति युक्तमेतत्।
वपुष्यशेषेऽखिललोककान्ता साऽनन्यकान्ता ह्युरसीतरा तु॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशसहितं संस्कृतेन व्याख्येयम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य तृतीयसर्गादुद्धृतमस्ति। अत्र कविः नानाविध-भूषणभूषितस्य भगवतः श्रीकृष्णस्य शोभां वर्णयति।

अन्वयः—प्रसाधितस्य अस्य मधुद्विषः अन्या एव लक्ष्मी अभूत् इति, एतत् युक्तम् हि सा अशेषे वपुषि (वसति किञ्च) अखिललोककान्ता इतरा तु अनन्यकान्ता उरसि।

व्याख्या—प्रसाधितस्य=अलङ्कृतस्य। अस्य=भगवतः श्रीकृष्णस्य। मधुं

द्वेष्टीति मधुद्विट्, तस्य मधुद्विषः=मधुदैत्यरिपोः। अन्यैव=अपरैव असदृशी विभिन्ना च। लक्ष्मीः=शोभा, पद्मा च। ("शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरपि गृह्यते" इति विश्वः।) अभूत्=अभवत्। इत्येतद् युक्तमेव=उचितमेव। अवर्णनीयैव कान्तिर्यदभूत्, तद् भूषितत्वाद् युक्तमेवेति भावः। हि=यस्मात्। सा=प्रसाधनरूपा लक्ष्मी। अशेषे=सम्पूर्णे। वपुषि=शरीरे। वसतीति शेषः। किञ्च—अखिलश्चासौ लोकश्च अखिललोकः, तस्य कान्ता अखिललोककान्ता=समग्रलोकप्रिया। भगवतः श्रीकृष्णस्य शोभा हि सर्वस्यैव मनोहारिणी। सर्व एवास्य देहभूषां कामयते इति भावः। इतरा=प्रसाधनेतरा पद्मारूपा हरेः धर्मपत्नीत्यर्थः। तु=पुनः। अन्यस्य कान्ता अन्यकान्ता, सा न भवतीति अनन्यकान्ता=अनन्यप्रिया। उरसि=हृदये। उरस्येव वसतीत्यर्थः। प्रसाधितस्य श्रीकृष्णस्यासाधारणी शोभा जातेति भावः। अत्र श्लेषेण लक्ष्मीशब्देन वाच्यायाः शोभायाः प्रतीयमानया श्रिया सहाभेदाध्यवसायादियमन्यैव लक्ष्मीरित्यभेदे भेदरूपातिशयोक्तिरलङ्कारः। उपजातिश्छन्दः।

समासः—मधुं द्वेष्टीति मधुद्विट्, तस्य मधुद्विषः। अखिलश्चासौ लोकश्च अखिललोकः, तस्य कान्ता अखिललोककान्ता। अन्यस्य कान्ता अन्यकान्ता, सा न भवतीति अनन्यकान्ता।

भावार्थः—विविधभूषणभूषितस्य भगवतः श्रीकृष्णस्य लक्ष्मीः (शोभा) अन्यैवाभूत्, इत्येतद् युक्तमेवाऽसीत् यतो हि सा सम्पूर्णे शरीरे व्याप्ताऽऽसीत् समस्तलोकप्रिया चाऽऽसीत्। परन्तु अन्या तु केवलं तस्य हृद्यासीत् अनन्यकान्ता चाऽऽसीत्।

(६६) प्रश्नः—

प्राणच्छिदां दैत्यपतेर्नखानामुपेयुषां भूषणतां क्षतेन।
प्रकाशकार्कश्यगुणौ दधानाः स्तनौ तरुण्यः परिवव्रुरेनम्॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं व्याख्येयम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य तृतीयसर्गादुद्धृतमस्ति। अत्र कविर्वर्णयति यद् भगवतः श्रीकृष्णस्य शोभां दृष्ट्वा तरुण्य एनं परिवव्रुरिति।

अन्वयः—भूषणताम् उपेयुषां दैत्यपतेः प्राणच्छिदां नखानां क्षतेन प्रकाशकार्कश्यगुणौ स्तनौ दधानाः तरुण्यः एनं परिवव्रुः।

व्याख्या—भूषणताम्=मण्डनताम्। उपेयुषाम्=प्राप्तवताम् न तु प्रहरण-
त्वतामिति भावः। दैत्यानां पतिः दैत्यपतिस्तस्य दैत्यपतेः=हिरण्यकशिपोः।
प्राणान् छिनत्तीति प्राणच्छित्, ते प्राणच्छिदः, तेषां प्राणच्छिदाम्=प्राणामुषाम्,
वज्रादपि कठोराणामिति भावः। नखानाम्=करजानाम्, क्षतेन=व्रणेन।
प्रकाशः कर्कश्यगुणो ययोस्तौ प्रकाशकार्कश्यगुणौ=प्रकटकाठिन्यगुणौ। स्तनौ=
कुचौ। ("स्तनौ कुचौ" इत्यमरः।) दधानाः=धारयन्त्यः। तरुण्यः=
युवतयः। ("तरुणी युवतिः समे" इत्यमरः।) एनं=श्रीकृष्णम्। परिवव्रुः=
पर्यवारयन्, वेष्टयामासुः। अत्र हरिनखानां नरहरिनखभेदेऽप्यभेदोक्त्या, स्तन-
योश्च तादृक्काठिन्यासम्बन्धेऽपि सम्बन्धोक्त्याऽतिशयोक्ती, तयोश्चाङ्गाङ्गिभावेन
स्थितत्वादङ्गाङ्गिभावसङ्करालङ्कारः। उपजातिश्छन्दः।

समासः—दैत्यानां पतिः दैत्यपतिः, तस्य दैत्यपतेः। प्राणान् छिनत्तीति
प्राणच्छित्, ते प्राणच्छिदः, तेषां प्राणच्छिदाम्। प्रकाशः कर्कश्यगुणो ययोस्तौ
प्रकाशकार्कश्यगुणौ।

भावार्थः—भूषणताम्प्राप्तवतो दैत्यराजस्य हिरण्यकशिपोः प्राणच्छिदां
अर्थात् वज्रादपि कठोराणामपि नखानां क्षतेन प्रकटकाठिन्यगुणौ स्तनौ धार-
यन्त्यो युवतयो भगवन्तं श्रीकृष्णं वेष्टयामासुः।

(६७) प्रश्नः—

यां यां प्रियः प्रैक्षत कातराक्षीं सा सा ह्रिया नम्रमुखी बभूव।
निःशङ्कमन्याः सममाहितेर्ष्यास्तत्रान्तरे जघ्नुरमुं कटाक्षैः॥

पद्यमिदं छन्दोऽलङ्कारप्रसङ्गनिर्देशपुरःसरं व्याख्येयम्। (१९८४)

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य
"शिशुपालवध" महाकाव्यस्य तृतीयसर्गादुद्धृतमस्ति। अत्र कविः भगवतः
श्रीकृष्णस्याङ्गनानां च परस्परं प्रेक्षणं वर्णयति।

अन्वयः—प्रियः यां यां कातराक्षीं प्रैक्षत सा सा ह्रिया नम्रमुखी बभूव
अन्याः आहितेर्ष्याः (सत्यः) तत्रान्तरे, निःशङ्कं समं कटाक्षैः अमुं जघ्नुः।

व्याख्या—प्रियः=भगवान् यां यां, कातरे अक्षिणी यस्याः सा कातराक्षी,
तां कातराक्षीम्=चञ्चलनयनाम्, प्रैक्षत=आलोकयत, अपश्यदित्यर्थः। सा
सा=तादृशी तादृशी (अत्र "नित्यवीप्सयोः" इति सूत्रेण वीप्सायां द्वित्वम्।)
ह्रिया=लज्जया, नम्रम्=आनतम्, मुखम्=आननम्, यस्याः सा नम्रमुखी=
आनताननेत्यर्थः। बभूव=अभूत्। स्वभाव एवायं स्नेहस्य, यत्प्रियावलोकने-

नावनतवदनत्वम् । एतेन कविना कार्यद्वारा लज्जासाध्वसभावोदय उक्तः । अन्यासामङ्गनानामीर्ष्याभावोदयमाह—अन्याः=अप्रेक्षिताङ्गनाः, अनवलोकिताः स्त्रियः, आहिता=कृता, ईर्ष्या=अक्षमा, याभिस्ताः आहितेर्ष्याः=कृताक्षमाः समत्सरा इत्यर्थः । तत्रान्तरे तस्मिन्नेवावसरे ("क्लीबेऽन्तरे चावकाशे तादर्थ्येऽवसरेऽवधौ" इति वैजयन्ती ।) निःशङ्कं=निर्भयं यथा स्यात्तथा, समं=युगपत्, कटाक्षैः=अपाङ्गदर्शनैः ("कटाक्षोऽपाङ्गदर्शनैः" इत्यमरः ।) वक्रदृष्टिभिरित्यर्थः । अमुं=भगवन्तं श्रीकृष्णम्, जघ्नुः=अताडयन्, सरोषमद्राक्षुरित्यर्थः । कातराक्षीमित्यस्य स्थाने कातराक्षीति पाठान्तरे चकितलोचना सतीत्यर्थः । "आहितेर्ष्याः" इत्यस्य स्थाने "आहितार्ष्यैः" इति पाठे समत्सरैरित्यर्थः । कटाक्षैरित्यस्य विशेषणं ज्ञेयम् । "प्रियः" इत्यस्य स्थाने प्रियामिति पाठान्तरे प्रेयसीमित्यर्थः । अत्रोपजातिश्छन्दः ।

**समासः**—कातरे अक्षिणी यस्याः सा कातराक्षी, तां कातराक्षीम् । नम्रं मुखं यस्याः सा नम्रमुखी । आहिता ईर्ष्या याभिस्ता आहितेर्ष्याः ।

**भावार्थः**—भगवान् श्रीकृष्णो यां यां सुन्दरीमपश्यत्, सा लज्जया नम्रमुखी सञ्जाता, तथा च याः श्रीकृष्णो न ददर्श, ता अन्याः स्त्रियः समत्सराः सत्यस्तदा निर्भयं युगपदेव तं भगवन्तं श्रीकृष्णं सरोषमद्राक्षुः ।

**( ६८ ) प्रश्नः—**

तस्यातसीसूनसमानभासो भ्राम्यन्मयूखावलिमण्डलेन ।
चक्रेण रेजे यमुनाजलौघः स्फुरन्महावर्त इवैकबाहुः ॥

इति पद्यं सप्रसङ्गं छन्दोऽलङ्कारनिर्देशसहितं व्याख्येयम् । ( १९८३ )

**उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च**—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य तृतीयसर्गादुद्धृतमस्ति । अत्र कविर्भगवतः श्रीकृष्णस्य विविधदिव्यास्त्रधारणप्रसङ्गे चक्रधारणं वर्णयति ।

**अन्वयः**—अतसीसूनसमानभासः तस्य एकबाहुः भ्राम्यन्मयूखावलिमण्डलेन चक्रेण स्फुरन्महावर्तः यमुनाजलौघ इव भेजे ।

**व्याख्या**—अतस्याः सूनमिति अतसीसूनम्, तेन समाना भाः यस्य सः, तस्य अतसीसूनसमानभासः=अतसीप्रसूनसमानकान्तेः, क्षुमापुष्पसमकान्तेः । ("अतसी स्यादुमाक्षुमा" इत्यमरः । "सूनं प्रसवपुष्पयोः" इत्यमरः । ) तस्य=श्रीकृष्णस्य । एकश्चासौ बाहुश्च एकबाहुः=एकभुजः । ("भुजबाहू प्रवेष्टो दोः" इत्यमरः ।) मयूखानामावलयः मयूखावलयः, तासां मण्डलं मयूखावलिमण्डलं,

भ्राम्यच्चासौ मयूखावलिमण्डलं भ्राम्यन्मयूखावलिमण्डलम्, तेन भ्राम्यन्मयूखावलिमण्डलेन=आवर्तमानकिरणनिकरचक्रवालेन। ("चक्रवाले तु मण्डलम्" इत्यमरः। "वीथ्यालिरावलिः पङ्क्तिः श्रेणी" इत्यमरः।) चक्रेण=सुदर्शनेन। महांश्चासौ आवर्तश्च महावर्तः, स्फुरन्महावर्तो यस्य सः स्फुरन्महावर्तः=भ्राम्यत्कुम्भनीकः, चलन्महाभ्रमः। ("स्यादावर्तोऽम्भसां भ्रमः" इत्यमरः।) यमुनाजलौघः=कालिन्दीजलपूरः। इव=यथा। रेजे=शुशुभे। श्रीकृष्णश्चक्रं दधावित्यर्थः। अत्रोपमालङ्कारः, उपजातिश्छन्दः।

समासः—अतस्याः सूनमिति अतसीसूनम्, तेन समाना भाः यस्य स, तस्य अतसीसूनसमानभासः। एकश्चासौ बाहुश्च एकबाहुः। मयूखानाम् आवलयः मयूखावलयः, तासां मण्डलं मयूखावलिमण्डलम्, भ्राम्यच्चासौ मयूखावलिमण्डलं भ्राम्यन्मयूखावलिमण्डलम्, तेन भ्राम्यन्मयूखावलिमण्डलेन। महांश्चासौ आवर्तश्च महावर्तः, स्फुरन्महावर्तो यस्य स स्फुरन्महावर्तः।

भावार्थः—अतसीपुष्पसमकान्तेर्भगवतः श्रीकृष्णस्य एकबाहुः आवर्तमानकिरणनिकरमण्डलेन सुदर्शनचक्रेण भ्राम्यत्कुम्भनीकः यमुनाजलौघ इव शुशुभे।

( ६९ ) प्रश्नः—

प्रवृद्धमन्द्राम्बुदधीरनादः कृष्णार्णवाभ्यर्णचरैकहंसः।
मन्दानिलापूरकृते दधानो निध्वानमश्रूयत पाञ्चजन्यः॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं संस्कृतेन व्याख्येयम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य तृतीयसर्गादुद्धृतमस्ति। अत्र कविः भगवतः श्रीकृष्णस्य पाञ्चजन्यशङ्खधारणं वर्णयति।

अन्वयः—प्रवृद्धमन्द्राम्बुदधीरनादः कृष्णार्णवाभ्यर्णचरैकहंसः (तथा) मन्दानिलापूरकृतं निध्वानं दधानः पाञ्चजन्यः अश्रूयत।

व्याख्या—धियं रातीति धीरः=मनोहरः, अम्बुदस्य धीरः अम्बुदधीरः, मन्द्रश्चासौ अम्बुदधीरश्चासौ नादश्च मन्द्राम्बुदधीरनादः, सः प्रवृद्धो येन सः प्रवृद्धमन्द्राम्बुदधीरनादः=दीर्घगम्भीरमेघवद्धीरध्वनिः। कृष्ण एवार्णवः कृष्णार्णवः, तस्य अभ्यर्णः कृष्णार्णवाभ्यर्णः, तत्र चरतीति कृष्णार्णवाभ्यर्णचरः, स चासौ एकहंसश्च कृष्णार्णवाभ्यर्णचरैकहंसः=श्रीकृष्णसमुद्रसमीपस्थराजहंसः। (तथा—) मन्दश्चासौ अनिलश्च मन्दानिलः, मन्दानिलस्य आपूरः मन्दानिलापूरः,

तेन कृतः मन्दानिलापूरकृतस्तं मन्दानिलापूरकृतम्=स्वल्पनिःश्वासपवनाध्मात-जनितम्। निध्वानं=शब्दम्। ("शब्दे निनादनिनदध्वानरवस्वनाः। स्वान-निर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः" इत्यमरः) दधानः=बिभ्राणः सन्, पाञ्च-जन्यः=तन्नामकः शङ्खः। अश्रूयत=आकर्णितः, श्रूयते स्म। अत्र "प्रवृद्ध-मन्द्राम्बुदधीरनादः" इत्यत्रोपमालङ्कारः, "कृष्णार्णवाभ्यर्णचरैकहंसः" इत्यत्र च श्लिष्टपरम्परितरूपकम्। अत्रोपजातिश्छन्दः।

समासः—धियं रातीति धीरः, अम्बुदस्य धीरः अम्बुदधीरः, मन्द्रश्चासौ अम्बुदधीरश्च इति मन्द्राम्बुदधीरः, मन्द्राम्बुदधीरश्चासौ नादश्च इति मन्द्राम्बुद-धीरनादः, मन्द्राम्बुदधीरनादः प्रवृद्धो येन सः प्रवृद्धमन्द्राम्बुदधीरनादः। कृष्ण एवार्णवः कृष्णार्णवः, तस्य अभ्यर्णः कृष्णार्णवाभ्यर्णः, तत्र चरतीति कृष्णार्णवाभ्यर्णचरः। कृष्णार्णवाभ्यर्णचरश्चासौ एकहंसश्च कृष्णार्णवाभ्यर्ण-चरैकहंसः। मन्दश्चासौ अनिलश्च इति मन्दानिलः, मन्दानिलस्य आपूरः मन्दानिलापूरः, तेन कृतः मन्दानिलापूरकृतः, तं मन्दानिलापूरकृतम्।

भावार्थः—घोरघटागम्भीरमेघध्वनिरिव पाञ्चजन्यहंसवच्छ्वेतवर्णस्य शङ्खस्य समुद्रवत् श्रीकृष्णान्तिकस्थस्य महान् गम्भीरोध्वनिरश्रूयत।

( ७० ) प्रश्नः—

ध्वजाग्रधामा ददृशेऽथ शौरेः सङ्क्रान्तमूर्तिर्मणिकुट्टिमेषु।
फणावतस्त्रासयितुं रसायास्तलं विविक्षन्निव पन्नगारिः॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपुर-स्सरं संस्कृतगिरा व्याख्येयम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य तृतीयसर्गादुद्धृतमस्ति। अत्र कविः श्रीकृष्णस्य पताकायां स्थितं गरुडं नागानां विनाशकत्वेनोत्प्रेक्षते।

अन्वयः—अथ शौरेः ध्वजाग्रधामा मणिकुट्टिमेषु सङ्क्रान्तमूर्तिः सन् पन्नगारिः फणावतः त्रासयितुं रसायाः तलं विविक्षन्निव ददृशे।

व्याख्या—अथ=रथरोहणानन्तरम्। शौरेः=कृष्णस्य। ध्वजाग्रधामा=पताकास्थानः। ("पताका वैजयन्ती स्यात् केतनं ध्वजमस्त्रियाम्।" इत्य-मरः।) पुनः कीदृशः? मणिकुट्टिमेषु=स्फटिकमेदिनीषु, मणिखचितभूमिषु। सङ्क्रान्तमूर्तिः=प्रतिबिम्बितशरीरः सन्, पन्नगारिः=सर्पान्तकः गरुडः। ("गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः। नागान्तको विष्णुरथः सुपर्णः पन्नगाशनः" इत्यमरः।) फणावतः=नागान्। त्रासयितुं=भीषयितुम्। रसायाः=

भूम्याः। तलम्=नीचैस्थितं भूगर्भमित्यर्थः। विविक्षन्=प्रवेष्टुमिच्छन्। इव= इत्युत्प्रेक्षायाम्। ददृशे=लोकैर्दृष्टः। गरुडोऽपि समुपस्थितोऽभूदित्यर्थः। अत्रोत्प्रेक्षालङ्कारः, उपजातिश्छन्दश्च।

समासः—ध्वजस्य अग्रं ध्वजाग्रम्, ध्वजाग्रं धाम यस्य सः ध्वजाग्रधामा। षष्ठीतत्पुरुषगर्भितबहुव्रीहिसमासः। मणीनां कुट्टिमाः मणिकुट्टिमाः, तासु मणिकुट्टिमेषु। षष्ठीतत्पुरुषसमासः। पन्नगानामरिः पन्नगारिः। षष्ठीतत्पुरुषसमासः।

भावार्थः—रथारूढे सति भगवति श्रीकृष्णे तस्य ध्वजाग्रभागे स्थिता गरुडमूर्तिः मणिखचितभूमौ प्रतिबिम्बिता जाता। तच्छायास्थितं गरुडं सर्पारिं पाताललोकं नागलोकं वा प्रवेष्टुमिच्छन्तमिव लोकाः ददृशुरिति कविरुत्प्रेक्षते।

( ७१ ) प्रश्नः—

अथोच्चकैस्तोरणसङ्गभङ्गभयावनम्रीकृतकेतनानि।
क्रियाफलानीव सुनीतिभाजं सैन्यानि सोमान्वयमन्वयुस्तम्॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भसमासविग्रहालङ्कारप्रदर्शनपूर्वकं सुरगिरा व्याख्यायताम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य तृतीयसर्गादुद्धृतमस्ति। अत्र कविः भगवतः श्रीकृष्णस्य सैन्यानुगमनं वर्ण्यते।

अन्वयः—अथोच्चकैस्तोरणसङ्गभङ्गभयावनम्रीकृतकेतनानि सैन्यानि सोमान्वयं तं सुनीतिभाजं क्रियाफलानि इव अन्वयुः।

व्याख्या—अथ=श्रीकृष्णप्रयाणानन्तरम्। उच्चकैस्तोरणसङ्गभङ्गभयावनम्रीकृतकेतनानि = उन्नतद्वारदारुसम्पर्कविनाशभयावनम्रीकृतपताकानि। सैन्यानि=सेना। ("ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः। वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्" इत्यमरः।) सोमान्वयम्=चन्द्रवंशीयम्। तं= श्रीकृष्णम्। सुनीतिभाजम्=उचितनीतिपात्रम्। क्रियाफलानि=कर्तव्यफलानीव। सामदामदण्डभेदावुपायप्रयोगजनितहिरण्यभूमिमित्रादिलाभा इव। अन्वयुः=अनुजग्मुः। अत्रोपमालङ्कारः। उपजातिश्छन्दः।

समासः—उच्चकैः तोरणम् उच्चकैस्तोरणम्, तेन तस्मिन् वा सङ्गः उच्चकैस्तोरणसङ्गस्तेन भङ्गः उच्चकैस्तोरणसङ्गभङ्गः, तस्माद् यद् भयम्, तेन अवनम्रीकृतानि केतनानि यैस्तानि उच्चकैस्तोरणसङ्गभङ्गभयावनम्रीकृतकेतनानि। क्रियायाः फलानि क्रियाफलानि। शोभना चासौ नीतिश्च सुनीतिः,

सुनीतिं भजते इति सुनीतिभाक्, तं सुनीतिभाजम् । सोमस्य अन्वयः सोमान्वयः, तं सोमान्वयन् ।

भावार्थः—भगवतः श्रीकृष्णस्य प्रस्थानानन्तरम् उन्नतद्वारदारुसम्पर्कविनाशभयावनम्रीकृतपताकानि सेनाः चन्द्रवंशिनं तं भगवन्तं श्रीकृष्णं सुष्ठुनीतिमन्तं कर्मफलानीवानुजग्मुः ।

( ७२ ) प्रश्नः—

न लङ्घयामास महाजनानां शिरांसि नैवोद्धतिमाजगाम ।
अचेष्टताष्टापदभूमिरेणुः पदाहतो यत् सदृशं गरिम्णः ॥

इति पद्यं सप्रसङ्गं देववाण्या व्याख्यायताम् । ( १९७० )

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य तृतीयसर्गात् समुद्धृतम् । अत्र कविः स्वर्णभूमिरेणोर्महाजनशिरोल्लङ्घनं वर्णयति ।

अन्वयः—अष्टापदभूमिरेणुः पदाहतः ( अपि सन् ) महाजनानां शिरांसि न लङ्घयामास (किञ्च–) उद्धतिं नैव आजगाम यत् गरिम्णः सदृशम् अचेष्टत ।

व्याख्या–अष्टसु धातुषु पदं=प्रतिष्ठा यस्य तद्, अष्टापदम्=कनकम्, स्वर्णमित्यर्थः ( "स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् । तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्वुरम् । चामीकरं जातरूपं महारजतकाञ्चने । रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्" इत्यमरः । ) तस्य भूमिरित्यष्टापदभूमिस्तस्य रेणु=रजः, ("रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयो रजः" इत्यमरः । ) इत्यष्टापदभूमिरेणुः=हिरण्यभूमिरज इत्यर्थः । पदैः पद्भिर्वा=पादैश्चरणैर्वा ("पादः पदोऽङ्घ्रिश्चरणोऽस्त्रियाम्" इत्यमरः । ) आहतः=ताडित इति पदाहतः, रथाश्वादिचरणताडित इत्यर्थः । महान्तश्च ते जनाश्च महाजनास्तेषां महाजनानाम्=मान्यजनानाम्, शिरांसि=मस्तकानि, न=नहि, लङ्घयामास=नाक्रमति स्म, नाधिरुरोहेत्यर्थः । किञ्च उद्धतिं=औद्धत्यं, नैव=नहि, आजगाम=प्राप, प्राप्तवानित्यर्थः । यत्=यस्मात्, गरिम्णः=गुरुत्वगुणस्य, गौरवगुणस्येत्यर्थः, सदृशम्=अनुरूपं यथा स्यात्तथा, अचेष्टत=अकरोत् । अलङ्घनव्यवहारे गुरुत्वस्यौद्धत्यप्रतिबन्धकत्वादिति भावः । अत्रानौद्धत्यादिप्रस्तुतसुवर्णपरागविशेषणसाम्यादप्रस्तुतसुजनप्रतीतेः समासोक्तिरलङ्कारः । उपजातिवृत्तम् ।

समासः—अष्टसु धातुषु पदं (प्रतिष्ठा) यस्य तद् अष्टापदम्, तस्य भूमिः

इति अष्टापदभूमिः, तस्य रेणु इति अष्टापदभूमिरेणुः। पदैः पद्भिर्वा आहतः पदाहतः। महान्तश्च ते जनाश्च महाजनास्तेषां महाजनानाम्।

भावार्थः—सुवर्णभूमिरजः रथाश्वादिचरणताडितोऽपि सन् मान्यलोकानां मस्तकानि नाचक्राम अर्थादुड्डीय मनुष्याणां शिरोभागेषु नापतितः औद्धत्यञ्च न प्राप्तवान् अर्थात् उपरि न उड्डयतिस्म। एतच्च सर्वं स स्वगौरवानुरूपमेव यथा स्यात्तथा चकार।

( ७३ ) प्रश्नः—

मध्येसमुद्रं ककुभः पिशङ्गीर्या कुर्वती काञ्चनवप्रभासा।
तुरङ्गकान्तामुखहव्यवाहज्वालेव भित्वा जलमुल्ललास॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा विवृणुत। ( १९७९ )

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य तृतीयसर्गादुद्धृतमस्ति। अत्र कविर्द्वारकापुरीं वर्णयति।

अन्वयः—मध्येसमुद्रं काञ्चनवप्रभासा ककुभः पिशङ्गीः कुर्वती या जलं भित्वा तुरङ्गकान्तामुखहव्यवाहज्वाला इव उल्ललास।

व्याख्या—समुद्रस्य=सागरस्य, मध्ये=मध्यभागे इति मध्येसमुद्रम् (अत्र "पारे मध्ये षष्ठ्या वा" इति पाणिनीयसूत्रेण विकल्पादव्ययीभावसमासः।) काञ्चनस्य=स्वर्णस्य, वप्रम्=प्राकारः, इति काञ्चनवप्रम्, तस्य भाः=दीप्तिः, इति काञ्चनवप्रभाः, तथा काञ्चनवप्रभासा, स्वर्णप्राकारदीप्त्येत्यर्थः। ककुभः=दिशाः, दिश इत्यर्थः। ("दिशस्तु ककुभः काष्ठा आशाश्च हरिताश्च ताः" इत्यमरः) पिशङ्गीः=पीतवर्णाः, कुर्वती=विदधती, या नगरी=द्वारका, जलम्=सागरजलं, भित्वा=विदार्य, उत्थितेति शेषः। तुरङ्गस्य कान्ता तुरङ्गकान्ता, तस्याः मुखं तुरङ्गकान्तामुखम्, तस्मिन् हव्यवाहः तुरङ्गकान्तामुखहव्यवाहः, तस्य ज्वाला इति तुरङ्गकान्तामुखहव्यवाहज्वाला इव=वडवाग्निज्वालेव। ("वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम्" इत्यमरः।) उल्ललास=उद्बभासे। अत्र समुद्रान्तर्लीनायां वडवानलज्वालायां कदाचिद् सम्भाव्यमानस्य मध्योल्लसनस्य पुरिदर्शनाभेदाध्यवसायेनास्या ज्वालात्वमुत्प्रेक्ष्यते। इवशब्दोऽयमुत्प्रेक्षाया एव व्यञ्जको नोपमायाः। अत्रोत्प्रेक्षालङ्कारः। ज्वालाया अप्रसिद्धत्वेनोपमानत्वायोगात्। "मन्ये शङ्के ध्रुवं नूनं प्राय इत्येव-

मादिभिः। उत्प्रेक्षा व्यज्यते शब्दैरिव शब्दोऽपि तादृशः।" इत्याचार्यदण्डी। अत्रोपजातिश्छन्दः।

**समासः**—समुद्रस्य मध्ये इति मध्येसमुद्रम्। काञ्चनस्य वप्रं काञ्चनवप्रम्, तस्य भाः इति काञ्चनवप्रभाः, तया काञ्चनवप्रभासा। हूयते इति हव्यम्, हव्यं वहतीति हव्यवाहः (अग्निः), तुरङ्गस्य कान्ता तुरङ्गकान्ता, तस्याः मुखम् तुरङ्गकान्तामुखम्, तस्मिन् हव्यवाहः, तस्य ज्वाला तुरङ्गकान्तामुखहव्यवाह-ज्वाला। केचन तु—तुरङ्गकान्तया तुल्यं मुखं यस्य स चासौ हव्यवाहः, तस्य ज्वाला तुरङ्गकान्तामुखहव्यवाहज्वाला—इति विग्रहमाहुः।

**भावार्थः**—कविः द्वारकापुरीं वर्णयन्नाह—समुद्रमध्ये स्वर्णप्राकारदीप्त्या दिशः पीतवर्णाः विदधती या द्वारकापुरी समुद्रजलं विदार्य (उपर्युत्थिता) वडवाग्निशिखेव शुशुभे।

(७४) **प्रश्नः**—

स्फुरत्तुषारांशुमरीचिजालैर्विनिह्नुताः स्फाटिकसौधपङ्क्तीः।
आरुह्य नार्यः क्षणदासु यत्र नभोगता देव्य इव व्यराजन्॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा विवृणुत।

**उत्तरम्**—**सन्दर्भः प्रसङ्गनिर्देशश्च**—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य तृतीयसर्गात् समुद्धृतमस्ति। अत्र कविः द्वारकापुरीं वर्णयन् तत्रत्यनारीणां रूपं निरूपयति।

**अन्वयः**—यत्र क्षणदासु नार्यः स्फुरत्तुषारांशुमरीचिजालैः विनिह्नुताः स्फाटिकसौधपङ्क्तीः आरुह्य नभोगताः देव्य इव व्यराजन्।

**व्याख्या**—यत्र=यस्यां द्वारकापुर्याम्, क्षणदासु=क्षपासु, रात्रिष्वित्यर्थः ("क्षणदा क्षपा" इत्यमरः।) नार्यः=वनिताः, स्त्रिय इत्यर्थः। तुषाराः अंशवः यस्य सः तुषारांशुः=चन्द्रमाः, तस्य मरीचयः=किरणाः, ("भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम्" इत्यमरः।) तेषां जालानि=समूहाः, तुषारांशुमरीचिजालानि, स्फुरन्ति च तानि स्फुरत्तुषारांशुमरीचिजालानि, तैः स्फुरत्तुषारांशुमरीचिजालैः=उल्लसच्चन्द्रकिरणसमूहैः। विनिह्नुताः=अपह्नुताः। स्फटिकानां विकाराः स्फाटिकाः, स्फाटिकाश्च ते सौधाश्च स्फाटिकसौधाः, तेषां पङ्क्तयः=श्रेण्यः, ("वीथ्यालिरावलिः पङ्क्तिः श्रेणी" इत्यमरः।) स्फाटिकसौधपङ्क्तयः, ताः स्फाटिकसौधपङ्क्तीः=स्फटिकोपलरचितसौधश्रेणीः, आरुह्य=अधिरुह्य

नभोगताः=आकाशस्थाः, देव्य इव=देवाङ्गना इव, व्यराजन्=विराजयामासुः। सौधानामग्रहणादभृङ्क्षत्वात् तत्र लक्ष्यमाणाः स्त्रियः खेचर्यं इव रेजुरित्यर्थः। अत्र एकरूपता ग्रहणात् सामान्यालङ्कारः—'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात्। नभोगतत्वोत्प्रेक्षायाश्च पूर्वोक्तसामान्यापेक्षत्वात् सङ्करः। अत्रोपजातिश्छन्दः।

समासः—तुषाराः अंशवो यस्य सः तुषारांशुः, तस्य मरीचयः तुषारांशुमरीचयः, तेषां जालानि तुषारांशुमरीचिजालानि, स्फुरन्ति च तानि तुषारांशुमरीचिजालानि इति स्फुरत्तुषारांशुमरीचिजालानि, तैः स्फुरत्तुषारांशुमरीचिजालैः। स्फटिकानां विकाराः स्फाटिकाः, स्फाटिकाश्च ते सौधाश्च स्फाटिकसौधाः, तेषां पङ्क्तयः, ताः स्फाटिकसौधपङ्क्तीः।

भावार्थः—यस्यां द्वारकापुर्यां रात्रिषु स्त्रिय उल्लसद्भिश्चन्द्रकिरणसमूहैरपह्नुताः ( अर्थादुभयोः समानरूपेण शुभ्रवर्णत्वादेकरूपाः अभिन्ना जायमानाः ) स्फाटिकोपलरचितसौधश्रेणीरधिरुह्याऽऽकाशस्था देवाङ्गना इव रेजुः।

( ७५ ) प्रश्नः—

> रम्या इति प्राप्तवतीः पताका रागं विविक्ता इति वर्धयन्ती।
> यस्यामसेवन्त नमद्वलीकाः समं वधूभिर्वलभीर्युवानः॥

पद्यमिदं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारोल्लेखपूर्वकं देववाण्या व्याख्येयम्। ( १६७८ )

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य तृतीयसर्गात् समुद्धृतमस्ति। अत्र कविर्द्वारकापुरीं वर्णयति।

अन्वयः—यस्यां युवानः रम्याः इति पताकाः प्राप्तवतीः विविक्ताः इति रागं वर्धयन्तीः नमद्वलीकाः वलभीः वधूभिः समम् असेवन्त।

व्याख्या—अत्रार्थद्वयं दृश्यते, प्रथमोऽर्थो वलभीपक्षेऽपरश्च रमण्यर्थे सङ्गच्छते। यस्यां=द्वारकानगर्यां, युवानः=तरुणाः, रम्याः=रमणीयाः, इति=अस्माद्धेतोः, ("इति हेतौ प्रकरणे प्रकारादिसमाप्तिषु" इति विश्वः।) पताकाः=वैजयन्तीः, ( "पताका वैजयन्त्यां च सौभाग्येऽर्कध्वजेऽपि च" इति विश्वः। ) प्राप्ताः=सम्प्राप्ताः, उत्क्षिप्तध्वजा इत्यर्थः। तथा च, विविक्ताः=विजनाः, विमलाश्चेति अस्माद्धेतोः, ("विविक्तौ पूतविजनौ" इत्यमरः।) रागम्=अनुरागं, वर्धयन्तीः=वृद्धिं नयन्तीः, नमन्त्यः=वलीकाः, यासां ताः नमद्वलीकाः=नम्र-

नीध्राः, कुटिलछादनान्ताः। बलभीः=कूटागाराणि, ( "कूटागारं तु बलभी" इत्यमरः। ) वधूभिः=स्त्रीभिः, समम्=सह, असेवन्त=सिषेविरे।

द्वितीयार्थस्तावत्—यस्यां=द्वारकानगर्यां रम्या इति अतिसुन्दरीत्वात् पताकाः प्राप्तवतीः=कीर्तिमवाप्तवतीः, विविक्ताः=विमलाः, सुरूपत्वात् रागं=स्नेहं वर्धयन्तीः, तथा च नमद्वलीकाः—नमन्त्यो वल्यास्त्रिवल्याख्या मध्यरेखा यासां ताः नमद्वलीकाः ( "वली मध्यमरेखोर्मिजीर्णत्वग्गृहदारुषु" इति वैजयन्ती ) वधूभिः, नमतीभिस्त्रिवल्याख्यमध्यरेखायुक्ताभिः स्त्रीभिः सह युवानः विहरन्तिस्म। अत्र वधूनां वलभीनां च प्रकृतानामेव धर्मसाधर्म्येणौपम्यावगमात् तुल्ययोगितालङ्कारः। "पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत्। एकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता" इति साहित्यदर्पणकृतलक्षणात्। अत्रोपजातिश्छन्दः।

समासः—नमन्त्यः वलीकाः यासां ताः नमद्वलीकाः।

भावार्थः—यस्यां द्वारकापुर्यां रमणीयत्वात् पताकायुक्ताः निर्जनत्वाद् रागं वर्द्धयन्तीः नम्रनीध्राश्चन्द्रशालाः ( बलभीः ) रमणीयत्वात् प्रसिद्धिं प्राप्ताभिः, शुद्धात्वात् स्नेहं वर्धयन्तीभिः नमतीभिस्त्रिवल्याख्यमध्यरेखायुक्ताभिर्वधूभिस्सह तरुणा अविहरन्।

( ७६ ) प्रश्नः—

निषेव्यमाणेन शिवैर्मरुद्भिरध्यास्यमाना हरिणा चिराय।
उदुरश्मिरत्नाङ्कुरधाम्नि सिन्धावाह्वास्त मेरावमरावतीं या॥

इति पद्यं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारोल्लेखपूर्वकं देववाण्या व्याख्येयम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य तृतीयसर्गादुद्धृतमस्ति। अत्र कविर्द्वारकापुरीं वर्णयति।

अन्वयः—शिवैः मरुद्भिः ( चिराय ) निषेव्यमाणेन हरिणा चिराय अध्यास्यमाना उदुरश्मिरत्नाङ्कुरधाम्नि सिन्धौ ( स्थिता— ) या मेरौ ( स्थिताम्— ) अमरावतीम् आह्वास्त।

व्याख्या—शिवैर्मरुद्भिः=शीतलमन्दसुगन्धयुक्तपवनैः। पक्षान्तरे—एकादशरुद्रैः मरुद्गणैर्देवैश्च, (चिराय=चिरकालम्) निषेव्यमाणेन=सेव्यमानेन, हरिणा=भगवता श्रीकृष्णेन। पक्षान्तरे—हरिणा=इन्द्रेण। ("यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशु

वाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु" इति विश्वः । चिराय= चिरकालम्, अध्यास्यमाना=अधिष्ठीयमाना, रत्नानामङ्कुराः रत्नाङ्कुराः, उद्गताः रश्मयो येषान्ते उद्रश्मयः, उद्रश्मयश्च ते रत्नाङ्कुराश्च उद्रश्मि-रत्नाङ्कुराः, तेषां धाम उद्रश्मिरत्नाङ्कुरधाम, तस्मिन् उद्रश्मिरत्नाङ्कुर-धाम्नि=ऊर्ध्वकिरणरत्नाङ्कुरस्थाने । एकत्र रत्नाकरत्वादन्यत्र रत्नसानुत्वा-च्चेति भावः । सिन्धौ=सागरे समुद्रे इत्यर्थः । स्थितेति शेषः । या द्वारकापुरी मेरौ=हेमाद्रौ, सुमेरावित्यर्थः । ( "मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः" इत्यमरः । ) स्थितामिति शेषः । अमराः=देवाः, सन्ति यस्यां सा अमरावती, तां अमरावतीम्=इन्द्रनगरीम् । ("नगरी त्वमरावती" इत्यमरः ।) आह्वास्त= स्पर्धयाऽऽहूतवती स्पर्धयाऽनुचकारेत्यर्थः । अत्र पूर्वार्धे श्लेषेऽपि सिन्धौ मेरौ स्थितेति प्रतिबिम्बभावेन साधर्म्योक्ते श्लेषानुप्राणितेयमुपमा । आह्वास्तेति सादृश्यप्रतिपादकः शब्दः, 'स्पर्धते ह्वयते द्वेष्टी'त्यनुशासनात् । अत्रोप-जातिश्छन्दः ।

समासः—रत्नानाम् अङ्कुराः रत्नाङ्कुराः, उद्गताः रश्मयः येषान्ते उद्रश्मयः, उद्रश्मयश्च ते रत्नाङ्कुराश्च उद्रश्मिरत्नाङ्कुराः, तेषां धाम उद्रश्मिरत्नाङ्कुरधाम, तस्मिन् उद्रश्मिरत्नाङ्कुरधाम्नि । अमराः सन्ति यस्यां सा अमरावती, ताम् अमरावतीम् ।

भावार्थः—शीतलमन्दसुगन्धयुतपवनैः चिरकालं सेवितेन भगवता श्रीकृष्णेन (पक्षान्तरे एकादशरुद्रैर्देवैश्च चिरकालं सेवितेन शक्रेण ) अधिष्ठीयमाना ऊर्ध्व-रश्मि रत्नाङ्कुरस्थाने समुद्रे स्थिता द्वारकापुरी सुमेरुपर्वते स्थिताम् अमरावतीं नगरीं स्पर्धापूर्वकमाकारयत् ।

( ७७ ) प्रश्नः—

आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरङ्गम् ।
फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥

इति पद्यं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारोल्लेखपूर्वकं देववाण्या व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य तृतीयसर्गादुद्धृतमस्ति । अत्र कविर्वर्णयति यत् श्रीकृष्णः समुद्रमवलोक्य तमपस्मारिणमाशशङ्के ।

अन्वयः—असौ आश्लिष्टभूमिम् उच्चैः रसितारं लोलद्भुजाकारबृहत्त-रङ्गं फेनायमानम् आपगानां पतिम् अपस्मारिणम् आशशङ्के ।

**व्याख्या**—असौ=भगवान् श्रीकृष्णः। आश्लिष्टा भूमिर्येन स आश्लिष्ट-भूमिस्तमाश्लिष्टभूमिम्=आलिङ्गितभूतलम्, पृथिव्यां पतितम्, विस्तृतं वेत्यर्थः। उच्चैः=तारं, रसितारं=ध्वनिं कुर्वन्तम्, उच्चस्वरेण ध्वनिं कुर्वन्तम्, पक्षान्तरे च तारस्वरेण क्रन्दितारम्। लोलन्तश्च=चञ्चलायमानाः, इतस्ततः पतन्त इत्यर्थः, ते भुजाश्च बाहवश्च ("भुजबाहू प्रवेष्टो दो"रित्यमरः।) लोलद्भुजाः, तेषामाकार इव आकारो येषां ते लोलद्भुजाकाराः, ते च ते बृहत्तरङ्गाः, ते सन्ति यस्य सः लोलद्भुजाकारबृहत्तरङ्गस्तं लोलद्भुजाकारबृहत्तरङ्गम्=चञ्चलद्बाहुसदृशमहत्कल्लोलं, चञ्चलबाहुसदृशविशालतरङ्गवन्तमित्यर्थः। फेनायमानम्=अब्धिकफमुद्वमन्तम्, ("डिण्डीरोऽब्धिकफः फेनः" इत्यमरः।) अपां समूहः आपम्, तेन गच्छन्तीति आपगाः, तासाम् आपगानाम्=नदीनाम्, पतिं=स्वामिनम् समुद्रमित्यर्थः। अपस्मारिणम्=अपस्माररोगिणम्, आशशङ्के=उत्प्रेक्षां चक्रे तत्कर्मयोगादिति भावः। अपस्मार्यपि भूमिमालिङ्गति, उच्चैः क्रन्दति, चापलबाहुश्च भवति, फेनं श्लेष्माणं चोद्वमति। तथा चोक्तं नैदानिकैः—

"क्रुधैर्धातुभिराहतेऽथ मनसि प्राणी मनः सन्दिशन्
दन्तान् खादति फेनमुद्गिरति दोः पादौ क्षिपन्मूढधीः।
पश्यन् रूपमसत्क्षितौ निपतति व्यर्था करोति क्रियां
बिभ्यत्सः स्वयमेव शाम्यति गते वेगे त्वपस्माररुक्॥" इति॥

अत्रोपजातिश्छन्दः।

**समासः**—आश्लिष्टा भूमिर्येन स आश्लिष्टभूमिस्तम् आश्लिष्टभूमिम् लोलन्तश्च ते भुजाश्च लोलद्भुजाः, तेषामाकार इव आकारो येषां ते लोलद्भुजाकाराः, लोलद्भुजाकाराश्च ते बृहत्तरङ्गाः, ते सन्ति यस्य सः लोलद्भुजाकारबृहत्तरङ्गस्तं लोलद्भुजाकारबृहत्तरङ्गम्। अपां समूहः आपम्, तेन गच्छन्तीति आपगाः, तासाम् आपगानाम्।

**भावार्थः**—स भगवान् श्रीकृष्णः भूमिमालिङ्गिनम् (पृथिव्यां विस्तृतं, उच्चैः ध्वनिं कुर्वन्तं, चञ्चलबाहुवद् विशालतरङ्गवन्तं, फेनयुक्तं, नदीनां पतिं समुद्रं, भूमौ पतितं, तारस्वरेण क्रन्दन्तं, चपलबाहुं, फेनं श्लेष्माणं चोद्वमन्तं अपस्माररोगिणमिव बुबुधे।

(७८) **प्रश्नः**—

उत्तालतालीवनसम्प्रवृत्तसमीरसीमन्तितकेतकीकाः।
आसेदिरे लावणसैन्धवीनां चमूचरैः कच्छभुवां प्रदेशाः॥

इति पद्यं सप्रसङ्गं सन्दर्भछन्दःकोशसमासभावार्थविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा व्याख्यायताम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य तृतीयसर्गादुद्धृतमस्ति । अत्र कविः श्रीकृष्णस्य भगवतश्चमूनां लवणसमुद्रभूमिप्रवेशं वर्णयति ।

अन्वयः—चमूचरैः उत्तालतालीवनसम्प्रवृत्तसमीरसीमन्तितकेतकीकाः लावणसैन्धवीनां कच्छभुवां प्रदेशाः आसेदिरे ।

व्याख्या—चमूषु चरन्तीति चमूचराः, तैः चमूचरैः=श्रीकृष्णसैनिकैः । उत्तालानि=उन्नतानि, च तानि तालीवनानि उत्तालतालीवनानि, तेषु सम्प्रवृत्तेन=निःसृतेन, समीरेण=वायुना, सीमन्तिताः=सीमन्तिन्यः, कृताः केतक्यः=केतकीलताः, येषु ते उत्तालतालीवनसम्प्रवृत्तसमीरसीमन्तितकेतकीकाः=समुन्नततालवृक्षविशेषकानननिःसृतवायुभिः, द्विधाकृतकेतकीलताः । लवणस्य सिन्धुर्लवणसिन्धुस्तस्येमा लावणसैन्धव्यः, ( अत्र "तस्येदम्" इति सूत्रेण अण्प्रत्ययः, "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" इत्युभयपदवृद्धिः । ) तासां लावणसैन्धवीनाम्=क्षीरसागरसम्बन्धिनीनाम् । कच्छस्य भुवः कच्छभुवस्तासां कच्छभुवाम्=अनूपभूमीनाम् । ( "जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः" इत्यमरः । ) प्रदेशाः=भागाः, आसेदिरे=प्राप्ताः । अत्र स्वभावोक्तिरनुप्रासालङ्कारो । ओजःश्लेषसौकुमार्याद्यनेकगुणानां सौन्दर्यमत्र विलसति । अत्रोपजातिश्छन्दः ।

समासः—चमूषु चरन्तीति चमूचराः, तैः चमूचरैः । उत्तालानि च तानि तालीवनानि उत्तालतालीवनानि, तेषु सम्प्रवृत्तेन समीरेण सीमन्तिताः केतक्यो येषु ते उत्तालतालीवनसम्प्रवृत्तसमीरसीमन्तितकेतकीकाः । लवणस्य सिन्धुः लवणसिन्धुः, लवणसिन्धोरिमा लावणसैन्धव्यस्तासां लावणसैन्धवीनाम् । कच्छस्य भुवः कच्छभुवस्तासां कच्छभुवाम् ।

भावार्थः—भगवतः श्रीकृष्णस्य सैनिकास्तेषु जलप्रायप्रदेशेषु सम्प्राप्ताः, समुन्नततालवृक्षकाननेषु सुगन्धितो वायुर्वातिस्म, तेन च वायुना वृक्षेष्वारूढा केतकीलताः सपुष्पाः वनिताशिरः केशचूडावद् मध्याद् द्विधा विभक्ता आसन् ।

( ७९ ) प्रश्नः—

लवङ्गमालाकलितावतंसास्ते नारिकेलान्तरपः पिबन्तः ।
आस्वादितार्द्रक्रमुकाः समुद्रादभ्यागतस्य प्रतिपत्तिमीयुः ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा व्याख्येयाम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य तृतीयसर्गादुद्धृतमस्ति। अत्र कविर्भगवतः श्रीकृष्णस्य सैनिकानां समुद्रादतिथिसत्कारप्राप्तिं वर्णयति ।

अन्वयः—लवङ्गमालाकलितावतंसाः नारिकेलान्तः अपः पिबन्तः आस्वादितार्द्रक्रमुकाः ते समुद्राद् अभ्यागतस्य प्रतिपत्तिम् ईयुः ।

व्याख्या—लवङ्गानां मालाः लवङ्गमालाः, ताभिः कलिता अवतंसाः यैस्ते लवङ्गमालाकलितावतंसाः=लवङ्गमाल्यैः कृतशिरोभूषणा इत्यर्थः । नारिकेलस्य अन्तः नारिकेलान्तः, नारिकेलाभ्यन्तरे, अपः=जलानि, पिबन्तः=पानविषयीकुर्वन्तः । आर्द्राश्च ते क्रमुकाश्चेति आर्द्रक्रमुकाः, आस्वादिताः=भक्षिताः, आर्द्रक्रमुकाः=आर्द्रपूगीफलानि, ("घोण्टा तु पूगः क्रमुकः" इत्यमरः ।) यैस्ते आस्वादितार्द्रक्रमुकाः=भक्षितापक्वपूगीफला इत्यर्थः । ते=श्रीकृष्णसैनिकाः, समुद्रात्=अब्धेः, अभ्यागतस्य=अतिथेः, प्रतिपत्तिम्=गौरवम्, सत्कारम्, ("प्रतिपत्तिः पदप्राप्तिः प्रवृत्तौ गौरवेऽपि च" इति विश्वः ।) ईयुः=आपुः। यथाऽऽगन्तुकः पूज्यते तथा समुद्रेण तेऽभ्यर्चिता इत्यर्थः। क्वचिद् "ईयुः" इत्यस्य स्थाने "आपुः" इत्येव पाठः, अर्थस्तूभयत्र समान एव । अत्रातिथिप्रतिपत्तिप्राप्तेर्विशेषणगत्या अवतंसकलनादिपदार्थहेतुत्वात् काव्यलिङ्गमलङ्कारः अत्रोपजातिश्छन्दः ।

समासः—लवङ्गानां मालाः लवङ्गमालाः, ताभिः कलिताः अवतंसा यैस्ते लवङ्गमालाकलितावतंसाः । नारिकेलस्य अन्तः नारिकेलान्तः । आर्द्राश्च क्रमुकाश्च आर्द्रक्रमुकाः, आस्वादिताः आर्द्रक्रमुकाः यैस्ते आस्वादितार्द्रक्रमुकाः अभित आगतः अभ्यागतः ।

भावार्थः—लवङ्गमाल्यैः कृतशिरोभूषणाः, नारिकेलाभ्यन्तरजलानि पिबन्तः, आस्वादितापक्वपूगीफलाः भगवतः श्रीकृष्णस्य सैनिकाः समुद्रादातिथ्यसत्कारं प्रापुः ।

(८०) प्रश्नः—

तुरगशताकुलस्य परितः परमेकतुरङ्गजन्मनः
प्रमथितभूभृतः प्रतिपथं मथितस्य भृशं महीभृता ।
परिचलतो बलानुजबलस्य पुरः सततः धृतश्रिय-
श्चिरविगतश्रियो जलनिधेश्च तदाभवदन्तरं महत् ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा विवृणुत ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य तृतीयसर्गादुद्धृतमस्ति । अत्र कविः श्रीकृष्ण-सैन्यस्य समुद्रस्य च परस्परमान्तर्यं वर्णयति ।

अन्वयः—परितः तुरगशताकुलस्य प्रतिपथं प्रमथितभूभृतः सततं धृतश्रियः पुरः परिचलतः बलानुजबलस्य परम् एकतुरङ्गजन्मनः महीभृता भृशं मथितस्य चिरविगतश्रियः जलनिधेः च तदा महत् अन्तरम् अभवत् ।

व्याख्या—परितः=समन्तात्, तुरगाणां=घोटकानाम्, ("घोटके वीति-तुरगतुरङ्गाश्वतुरङ्गमाः । वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः" इत्यमरः ।) शतं तुरगशतम्, तुरगशतैराकुलस्य=व्याप्तस्य, अपरिमिताश्वस्येत्यर्थः । प्रतिपथं=प्रतिमार्गम्, प्रकर्षेण मथिताः प्रमथिताः, भूभृतो येन सः, तस्य प्रमथितभूभृतः=क्षुण्णविपक्षभूपस्य, विदीर्णपर्वतस्य वेत्यर्थः । सततं=निरन्तरम् । धृता श्रीः=शोभा रमा च, येन सः, तस्य धृतश्रियः=सश्रीकस्य, पुरोऽग्रे, नगराद्वा, परिचलतः =परिगच्छतः, बलस्य=बलरामस्य, अनुजः=बलानुजः, बलानुजस्य=श्रीकृष्णस्य, बलम्=सैन्यम्, ("बलं सैन्ये बलो रामे" इति शाश्वतः ।) बला-नुजबलम्, तस्य बलानुजबलस्य=श्रीकृष्णचम्वा इत्यर्थः । परम्=केवलम्, एकश्चासौ तुरङ्गश्च एकतुरङ्गः, उच्चैःश्रवोमात्रैकस्याश्वस्य जन्म उत्पत्तिर्यस्मात् एकतुरङ्गजन्म, तस्य एकतुरङ्गजन्मनः=उच्चैःश्रवोमात्रैकाश्वोत्पत्तेः । एकोऽपि एव न त्वस्तीति भावः । महीभृता=मन्दराचलेन, राज्ञा च । भृशम्=अत्यन्तम्, मथितस्य=विलोडितस्य । चिरं विगता श्रीर्यस्य सः, तस्य विगत-श्रियः=बहुकालनिवृत्तलक्ष्मीकस्य, उत्पत्त्यनन्तरमेवास्याः हरिस्वीकरणादिति भावः । जलनिधेश्च=समुद्रस्य च । तदा प्रस्थानसमये, महत्=अधिकम्, अन्तरम्=दूरगमनादिव्यवधानम्, उक्तरीत्या महत्तारतम्यं चाभवत्=अभूत् । समुद्रात्सैन्यं दूरं गतमित्यर्थः । अत्रोपमेयस्य हरिबलस्योपमानाज्जलधे-राधिक्यवर्णनाद् व्यतिरेकालङ्कारः । अत्र पञ्चकावलीवृत्तम्—"नजभजजा जरौ नरपते कथिता भुवि पञ्चकावली" इति लक्षणात् । धृतश्रीवृत्तमिति केचित्—"नजभपुरस्कृता जजजरा रचिता भुवि रुद्रदिक्पति" रिति लक्षणात् ।

समासः—तुरगाणां शतं तुरगशतम्, तुरगशतैराकुलः तुरगशताकुलस्तस्य

तुरगशताकुलस्य । पथि पथि प्रतिपथम् । प्रकर्षेण मथिताः प्रमथिताः, प्रमथिताः भूभृतो येन सः प्रमथितभूभृत्, तस्य प्रमथितभूभृतः । धृता श्रीर्येन सः धृतश्रीस्तस्य धृतश्रियः । बलस्य अनुजः बलानुजः, बलानुजस्य बलं बलानुजबलम्, तस्य बलानुजबलस्य । एकश्चासौ तुरङ्गश्च एकतुरङ्गः, तस्य जन्म एकतुरङ्गजन्म, तस्य एकतुरङ्गजन्मनः । चिरं विगता श्रीर्यस्य स चिरविगतश्रीस्तस्य चिरविगतश्रियः ।

भावार्थः—परितोऽपरिमितैरश्वैर्व्याप्तस्य, प्रतिमार्गं विजितविपक्षनृपतेः, निरन्तरं शोभायमानस्य लक्ष्मीयुक्तस्य वा नगरादग्रे गच्छतः श्रीकृष्णसैन्यस्य तथा केवलमेकाश्वोत्पादकस्य, मन्दराचलेन निरन्तरं प्रमथितस्य, चिरकालञ्च लक्ष्म्या विरहितस्य समुद्रस्य तस्मिन् प्रस्थानकाले महदान्तर्यमजायत । उक्तरीत्या समुद्रापेक्षया चम्वामतीवोत्कृष्टत्वमासीत्, किन्तु कथाप्रसङ्गदृष्ट्या सेना समुद्रादतिदूरं गतेति तात्पर्यम् ।

॥ इति तृतीयः सर्गः ॥

---

## चतुर्थः सर्गः

( ८१ ) प्रश्नः—

निःश्वासधूमं सह रत्नभाभिर्भित्वोत्थितं भूमिमिवोरगाणाम् ।
नीलोपलस्यूतविचित्रधातुमसौ गिरिं रैवतकं ददर्श ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं संस्कृतगिरा व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य चतुर्थसर्गादुद्धृतमस्ति । अत्र कविर्भगवतः श्रीकृष्णस्य रैवतकपर्वतदर्शनं वर्णयति ।

अन्वयः—असौ नीलोपलस्यूतविचित्रधातुं ( अत एव— ) रत्नभाभिः सह भूमिं भित्वा उत्थितम् उरगाणां निःश्वासधूमम् इव स्थितं रैवतकं गिरिं ददर्श ।

व्याख्या—असौ=भगवान् श्रीकृष्णः । नीलाश्च ते उपलाश्च नीलोपलाः, नीलोपलैः=इन्द्रनीलमणिभिः, स्यूताः=प्रोताः, विचित्राः=नानावर्णाः, धातवो=

गैरिकादयो यस्य सः, तं नीलोपलस्यूतविचित्रधातुम्=इन्द्रनीलमणिप्रोतनानावर्ण-गैरिकादिधातुमित्यर्थः। अत एव, रत्नानां भाः रत्नभास्ताभिः रत्नभाभिः=मणिप्रभाभिः, सह=समम्, भूमिं=धराम्। ("भूर्भूमिरचलाऽनन्ता रसा विश्वम्भरा स्थिरा। धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिः" इत्यमरः।) भित्त्वा =विदार्य, उत्थितम्=ऊर्ध्वं निर्गतम्, उरगाणां=भुजङ्गानाम्, ("सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः। उरगः पन्नगो भोगी जिह्मगः पवनाशनः" इत्यमरः। निःश्वास एव धूम निःश्वासधूमस्तं निःश्वासधूमम्=फूत्कारवाष्पमिव। स्थितमिति शेषः। रैवतकं=रैवतकनामानं, गिरिं=पर्वतम्, ददर्श= अपश्यत्। अत्रोत्प्रेक्षालङ्कारः, उपजातिश्छन्दः।

समासः—नीलाश्च ते उपलाश्च नीलोपलाः, नीलोपलैः स्यूताः विचित्राः धातवो यस्य स नीलोपलस्यूतविचित्रधातुस्तं नीलोपलस्यूतविचित्रधातुम्। रत्नानां भाः रत्नभाः, ताभिः रत्नभाभिः। निःश्वास एव धूमः निःश्वासः, धूम इवेति वा निःश्वासधूमस्तं निःश्वासधूमम्।

भावार्थः—स भगवान् श्रीकृष्णः, इन्द्रनीलमणिभिस्सम्बद्धगैरिकमनःशिलाद्यनेकविधनानावर्णधातुयुक्तं, अत एव रत्नानां रश्मिभिः सह भूमिं विदार्योपरि निर्गतं, भुजङ्गमानां निःश्वासवायुधूममिव स्थितं रैवतकनामानं पर्वतं ददर्श।

(८२) प्रश्नः—

सहस्रसंख्यैर्गगनं शिरोभिः पादैर्भुवं व्याप्य वितिष्ठमानम्।
विलोचनस्थानगतोष्णरश्मिनिशाकरं साधु हिरण्यगर्भम्।

इति पद्यं सप्रसङ्गं सन्दर्भभावार्थछन्दःकोशसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा विवृणुत।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य चतुर्थसर्गादुद्धृतमस्ति। अत्र कविर्भगवता श्रीकृष्णेन दृष्टं रैवतकपर्वतं हिरण्यगर्भं ब्रह्माणमिवोत्प्रेक्षते।

अन्वयः—सहस्रसङ्ख्यैः शिरोभिः गगनं (सहस्रसंख्यैः) पादैः भुवं व्याप्य वितिष्ठमानं विलोचनस्थानगतोष्णरश्मिनिशाकरं साधु हिरण्यगर्भम् (असौ गिरिं रैवतकं ददर्श)।

व्याख्या—सहस्रं संख्या येषां ते, तैः सहस्रसंख्याकैः, शिरोभिः=शिखरैः। पक्षान्तरे—शीर्षैः। गगनं=व्योम, (तथा च सहस्रसंख्याकैः) पादैः=प्रत्यन्तपर्वतैः, पक्षान्तरे—चरणैः। ("पादो ब्रध्ने तुरीयांशे शैलप्रत्यन्तपर्वते। चरणे

च मयूखे च" इति मेदिनी । ) भुवं=भूमिम्, व्याप्य=अभिव्याप्य, वितिष्ठमानम्=अवतिष्ठमानम् । विलोचनयोः स्थानं विलोचनस्थानम्, तत्र गतौ उष्णरश्मिनिशाकरौ=सूर्यचन्द्रमसौ, यस्य सः विलोचनस्थानगतोष्णरश्मिनिशाकरस्तं विलोचनस्थानगतोष्णरश्मिनिशाकरम्=नेत्रस्थानस्थितदिवाकरसुधांशुम्, पक्षान्तरे— नेत्रीकृतार्केन्दुमित्यर्थः । साधु=सत्यम्, हिरण्यस्य गर्भः हिरण्यगर्भस्तं हिरण्यगर्भम्=ब्रह्माणमिवेत्युत्प्रेक्षा, पक्षान्तरे— साधुहिरण्यगर्भं=सुवर्णखानियुक्तं, असौ गिरिं रैवतकं ददर्शेति पूर्वेणान्वयः । ब्रह्मणः सहस्रं शिरांसि, सहस्रं पादाश्च सन्ति । चक्षुषोः सूर्यचन्द्रमसौ वहति "सहस्रशीर्षाः पुरुषः सहस्राक्षः" इति श्रुतेः । अत्रोत्प्रेक्षालङ्कारः । अत्रोपजातिर्वृत्तम् ।

समासः—सहस्रं संख्या येषां ते, तैः सहस्रसंख्यैः । विलोचनयोः स्थानं विलोचनस्थानम्, तत्र गतावुष्णरश्मिनिशाकरौ यस्य स विलोचनस्थानगतोष्णरश्मिनिशाकरस्तं विलोचनस्थानगतोष्णरश्मिनिशाकरम् । साधु च हिरण्यं च साधुहिरण्यम्, तद् गर्भे यस्य सः साधुहिरण्यगर्भस्तं साधुहिरण्यगर्भम् । अन्यत्र— 'साधु' इति पृथक् पदम्, सत्यमित्यर्थेऽव्ययमिदम् । अथवा समासे हिरण्यगर्भस्य विशेषणमेव । हिरण्यस्य गर्भः हिरण्यगर्भस्तं हिरण्यगर्भम् ।

भावार्थः—सहस्रैः शिखरैराकाशे सहस्रैः प्रत्यन्तपर्वतभूतैः पादैः पृथिव्यां व्याप्य स्थितं सूर्यं सुधांशुञ्च नेत्रद्वयस्थाने धारयन्तम्, अतएव सहस्रैर्मस्तकैराकाशे सहस्रैश्चरणैश्च भूतले व्याप्य स्थितं नेत्रीकृतार्केन्दुं हिरण्यगर्भं ब्रह्माणमिव प्रतीयमानं सुवर्णखनियुक्तं तं रैवतकं पर्वतमसौ भगवान् श्रीकृष्णो ददर्श ।

( ८३ ) प्रश्नः—

स्कन्धाधिरूढोज्ज्वलनीलकण्ठानुर्वीरुहः श्लिष्टतनूनहीन्द्रैः ।
प्रनर्तितानेकलताभुजाग्रान् रुद्राननेकानिव धारयन्तम् ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं देववाण्या व्याख्यायताम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य चतुर्थसर्गादुद्धृतमस्ति । अत्र कविर्भगवता श्रीकृष्णेन दृष्टं रैवतकपर्वतं वर्णयति ।

अन्वयः—स्कन्धाधिरूढोज्ज्वलनीलकण्ठान् अहीन्द्रैः श्लिष्टतनून् प्रनर्तितानेकलताभुजाग्रान् ( अत एव ) अनेकान् रुद्रान् इव ( स्थितान् ) उर्वीरुहः धारयन्तम् ( असौ गिरि रैवतकं ददर्श ) ।

व्याख्या—स्कन्धं=प्रकाण्डमधिरूढा=स्थिता, उज्ज्वला नीलकण्ठाः=मयूराः येषां, तान् स्कन्धाधिरूढोज्ज्वलनीलकण्ठान्, अन्यत्र स्कन्धाधिरूढा=अंसस्थिताः, नीलाः कण्ठा येषां, तान् स्कन्धाधिरूढोज्ज्वलनीलकण्ठान्। ("अंसप्रकाण्डयोः स्कन्धः" इति विश्वः।) अहीनामिन्द्रा अहीन्द्रास्तैरहीन्द्रैः=भुजङ्गश्रेष्ठैः (सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः" इत्यमरः।) श्लिष्टाः=व्याप्ताः, तन्वः=देहाः, येषां तान् श्लिष्टतनून्=व्याप्तदेहान्। लता एव भुजाः लताभुजाः, अन्यत्र—लता इव भुजाः लताभुजाः। अनेकाश्च ते लताभुजा अनेकलताभुजाः, प्रनर्तितान्यनेकलताभुजानाम् अग्राणि येषां, तान् प्रनर्तितानेकलताभुजाग्रान्=वायुकारणेन प्रकल्पितानेकवल्लरीरूपभुजाग्रभागान्। अन्यत्र—प्रनर्तितानेकलताभुजाग्रान्= अभिनयकारणेन प्रकम्पितलतातुल्यभुजाग्रान्। अत एव, अनेकान्=बहून्, "अनन्तान्" इति पाठे असंख्यानित्यर्थः। रुद्रान्=देवविशेषानिव, स्थितानिति शेषः। उर्वीरुहः=वृक्षान्, धारयन्तम्=उद्वहन्तम्। असौ=भगवान् श्रीकृष्णः, रैवतकनामानं पर्वतं ददर्शेति पूर्वेणान्वयः। अत्रोत्प्रेक्षालङ्कारः। अत्रोपजातिश्छन्दः।

समासः—स्कन्धम् अधिरूढाः स्कन्धाधिरूढाः, उज्ज्वलाश्च ते नीलकण्ठाश्च उज्ज्वलनीलकण्ठाः, स्कन्धाधिरूढाः उज्ज्वलनीलकण्ठाः येषां, तान् स्कन्धाधिरूढोज्ज्वलनीलकण्ठान्। अन्यत्र—स्कन्धम् अधिरूढाः उज्ज्वलाः नीलकण्ठाः येषां, तान् स्कन्धाधिरूढोज्ज्वलनीलकण्ठान्। श्लिष्टाः तन्वः येषां, तान् श्लिष्टतनून्। लता एव भुजाः लताभुजाः। अन्यत्र—लता इव भुजाः लताभुजाः। अनेकाश्च ते लताभुजाः अनेकलताभुजाः, प्रनर्तितानि अनेकलताभुजानाम् अग्राणि येषां, तान् प्रनर्तितानेकलताभुजाग्रान्।

भावार्थः—स्कन्धस्थितामनोहरश्यामकण्ठान् सर्पैर्व्याप्तशरीरान् तथा चाभिनयकारणेन प्रकम्पितलतातुल्यभुजाग्रान् अनेकरुद्रानिव स्थितान् तादृशप्रकाण्डस्थितमनोज्ञमयूरान्, वायुकारणेन च कम्पितलतारूपभुजाग्रयुक्तान् वृक्षान् धारयन्तमिव "रैवतक"नामानं पर्वतमसौ भगवान् श्रीकृष्णो ददर्श।

(८४) प्रश्नः—

राजीवराजीवशलोलभृङ्गं मुष्णन्तमुष्णं ततिभिस्तरूणाम्।
कान्तालकान्ता ललनाः सुराणां रक्षोभिरक्षोभितमुद्वहन्तम्॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं संस्कृतेन व्याख्यायताम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य चतुर्थसर्गादुद्धृतमस्ति । अत्र कविर्भगवता श्रीकृष्णेन दृष्टं रैवतकपर्वतं वर्णयति ।

अन्वयः—राजीवराजीवशलोलभृङ्गम् तरूणां ततिभिः उष्णं मुष्णन्तं कान्तालकान्ताः सुराणां ललनाः रक्षोभिः अक्षोभितम् उद्वहन्तम् ( असौ गिरिं रैवतकं ददर्श ) ।

व्याख्या—राजीवानां=कमलानां, राजयः=श्रेणयः, इति राजीवराजयः, राजीवराजीनां=कमलश्रेणीनां, वशाः=अधीनाः, लोलाश्चपलाः, भृङ्गाः=भ्रमरा यस्मिन् सः, तं राजीवराजीवशलोलभृङ्गं=कमलश्रेण्यधीनचपलभ्रमरम् । तरूणां=महीरुहाणाम्, वृक्षाणामित्यर्थः । ततिभिः=सङ्घैः, उष्णम्=आतपम्, मुष्णन्तं=हरन्तं, कान्ता=मनोज्ञाः, ( "कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम्" इत्यमरः । ) अलकान्ताश्चूर्णकुन्तलाग्राणि यासां ताः कान्तालकान्ताः । ("अलकाश्चूर्णकुन्तला" इत्यमरः । ) सुराणाम्=अमराणां, देवानामित्यर्थः । ललना=स्त्रियोऽप्सरसः, रक्षोभिः=यातुधानैः, राक्षसैरित्यर्थः । ( "राक्षसः कौणपः क्रव्यात्क्रव्यादोऽस्रप आशरः । रात्रिञ्चरो रात्रिचरः कर्बुरो निकषात्मजः । यातुधानः पुण्यजनो नैर्ऋतो यातुराक्षसी" इत्यमरः ।) अक्षोभितम्=अनभिभूतं यथा स्यात्तथा, उद्वहन्तं=धारयन्तम् । केषाञ्चनमते—ललना उद्वहन्तम्, तथा रक्षोभिः=राक्षसैः, अक्षोभितम्=अनुपद्रुतम्, असेव्यमित्यर्थः असौ=भगवान् श्रीकृष्णः, गिरिं रैवतकं=रैवतकनामानं पर्वतं, ददर्श= अवलोकयामास । अत्र यमकालङ्कारः, उपजातिवृत्तश्च ।

समासः—राजीवानां राजयो राजीवराजयः, राजीवराजीनां वशाः लोला भृङ्गाः यस्मिन् सः, तं राजीवराजीवशलोलभृङ्गम् । कान्ताः अलकान्ताः यासां ताः कान्तालकान्ताः ।

भावार्थः—भगवान् श्रीकृष्णः कमलश्रेण्यधीनचपलभ्रमरं, वृक्षसमूहैरातपमपहरन्तं, मनोहरकेशाग्रा देवाङ्गनाः राक्षसैरनभिभूतं यथा स्यात्तथा धारयन्तं ( अथवा देवाङ्गनाः धारयन्तं राक्षसैरनुपद्रुतञ्च ) रैवतकं पर्वतमपश्यत् ।

( ८५ ) प्रश्नः—

यतः परार्ध्यानि भृतान्यनूनैः प्रस्थैर्मुहुर्भूरिभिरुच्छिखानि ।
आढ्यादिव प्रापणिकादजस्रं जग्राह रत्नान्यमितानि लोकः ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं विवृणुत ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य चतुर्थसर्गादुद्धृतमस्ति । अत्र कविर्भगवता श्रीकृष्णेन दृष्टस्य रैवतकपर्वतस्य रत्नप्राचुर्यं वर्णयति ।

अन्वयः—लोकः परार्ध्यानि अनूनैः भूरिभिः प्रस्थैः भृतानि उच्छिखानि अमितानि रत्नानि यतः आढ्यात् प्रापणिकात् इव, अजस्रं जग्राह ।

व्याख्या—लोको=जनः, परार्ध्यानि=उत्तमानि ("क्लीवे प्रधानं प्रमुख-प्रवेकानुत्तमोत्तमाः । मुख्यवर्यवरेण्याश्च प्रवर्होऽनवरार्ध्यवत् । परार्ध्याग्रप्राग्रहर-प्राग्र्याग्र्याग्रीयमग्रियम्" इत्यमरः ।) महार्घाणीति पाठान्तरे बहुमूल्यानीत्यर्थः । अनूनैर्महद्भिः, भूरिभिः=प्रचुरैः, ("प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु । पुरुहूः पुरु भूयिष्ठं स्फारं भूयश्च भूरि च" इत्यमरः ।) प्रस्थैः=सानुभिर्मानविशेषैश्च ("प्रस्थोऽस्त्री सानुमानयोः" इत्यमरः ।), भृतानि=सम्भृतानि मितानि च, उद्गताः शिखाः=किरणाः, येषां तानि उच्छिखानि=उद्गरश्मीनि, न मितान्यमितानि=अपरिमितानि, रत्नानि=मणीन्, यतो रैवतकपर्वतात्, आढ्यात्=इभ्यात्, धनिकादित्यर्थः । ("इभ्य आढ्यो धनी" इत्यमरः ।) प्रपणो=व्यवहारः, प्रयोजनमस्येति प्रापणिकः=वणिक्, तस्मात् प्रापणिकात्=वणिजः, (अत्र "तदस्य प्रयोजनम्" इति सूत्रेण ठक् ।) ("पण्याजीवः प्रापणिका वैदेहा नैगमाश्च ते । वणिजः" इति वैजयन्ती) इव=यथा, अजस्रं=मुहुर्जग्राह=अवाप । अत्रोपमालङ्कारः, उपजातिश्च वृत्तम् ।

समासः—उद्गताः शिखाः येषां तान्युच्छिखानि । प्रपणः (व्यवहारः) प्रयोजनमस्येति प्रापणिकः । न मितानि अमितानि ।

भावार्थः—रैवतकं निकषा वसन्तो जनाः यतः श्रेष्ठानि बहुमूल्यानि महद्भिः प्रचुरैः प्रस्तरैर्युक्तानि तत्समानि वा उद्गरश्मीन्यपरिमितानि रत्नानि तथैव प्रापुर्यथा महद्भिर्मानविशेषभूतैः प्रस्तरैर्निर्मितानि बहुमूल्यान्युद्गरश्मीन्यपरिमितानि रत्नानि धनिकाज्जना मुहुर्मुहुर्लभन्ते ।

(८९) प्रश्नः—

यत्रोज्झिताभिर्मुहुरम्बुवाहैः समुन्नमद्भिः न समुन्नमद्भिः ।
वनं बबाधे विषपावकोत्था विपन्नगानामविपन्नगानाम् ॥

इति पद्यं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारोल्लेखपूर्वकं देववाण्या व्याख्येयम्। ( १९७८ )

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य चतुर्थसर्गादुद्धृतमस्ति। अत्र कविभंगवता श्रीकृष्णेन दृष्टे रैवतकपर्वते वृष्टजलक्लिन्नसर्पयुक्तवृक्षवनस्य विषाग्निसमुत्पन्न-क्षोभाभावं वर्णयति।

अन्वयः—यत्र समुन्नमद्भिः अम्बुवाहैः उज्झिताभिः अद्भिः मुहुः समुन्नम् अविपन्नगानां नगानां वनं विषपावकोत्था विपत् न बबाधे।

व्याख्या—यत्र=शैले, रैवतकपर्वते इत्यर्थः। ऊर्ध्वं नमद्भिः उन्नमद्भिः, सम्यगुन्नमद्भिः समुन्नमद्भिः=समुत्पतद्भिः, अम्बुवाहैः=मेघैः, उज्झिताभिः=त्यक्ताभिः, वर्षिताभिरित्यर्थः। अद्भिः=सलिलैः, मुहुः=वारं वारम्, सम्यगुन्नं समुन्नम्=सिक्तमित्यर्थः, विगताः पन्नगाः येभ्यस्ते विपन्नगाः=विगतभुजङ्गमाः, न भवन्तीत्यविपन्नगास्तेषामविपन्नगानाम्=अविगतभुजङ्गमानाम्, सर्पयुक्ताना-मित्यर्थः। नगानां=वृक्षाणाम्, ( शैलवृक्षौ नगावगौ" इत्यमरः। )। वनं=काननम्, विषमेव पावकोऽग्निरिति विषपावकः, तस्मादुत्तिष्ठतीति विषपाव-कोत्था=विषाग्निसमुत्पन्ना, विपत्=आपत् ( दाहो ), न नहि, बबाधे=पीडयामास। नित्यं वर्षनुसङ्गाद्विषाग्निक्षोभो वृक्षाणामकिञ्चित्कर इति भावः। 'समुन्नमद्भिर्न समुन्नमद्भिः' तथा 'विपन्नगानामविपन्नगानाम्' इत्यत्र विरोधा-भासोऽलङ्कारः। उपजातिश्छन्दः।

समासः—ऊर्ध्वं नमद्भिः, उन्नमद्भिः, सम्यक् उन्नमद्भिः समुन्नमद्भिः। सम्यक् उन्नम् समुन्नम्। विगताः पन्नगाः येभ्यस्ते विपन्नगाः, विपन्नगाः न भवन्तीति अविपन्नगाः। विषमेव पावकः विषपावकः, तस्मादुत्तिष्ठतीति विषपावकोत्था।

भावार्थः—रैवतकपर्वते उन्नमद्भिर्मेघैर्वर्षितैर्जलैः पुनःपुनरार्द्रीकृतैः सर्पैः-युक्तानां वृक्षाणां वनानि सर्पविषाग्निदाहो न पीडयामासेति भावः।

( ८७ ) प्रश्नः—

उच्चारणज्ञोऽथ गिरां दधानमुच्चारणत्पक्षिगणास्तटीस्तम्।
उत्कं धरं द्रष्टुमवेक्ष्य शौरिमुत्कन्धरं दारुक इत्युवाच॥

पद्यमिदं सप्रसङ्गं छन्दोऽलङ्कारनिर्देशसहितं व्याख्येयम् ( १९८३ )

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य

शिशुपालवध"महाकाव्यस्य चतुर्थसर्गादुद्धृतमस्ति। अत्र कविः श्रीकृष्ण-
ारथिना भगवन्तं श्रीकृष्णं प्रत्युक्तं वर्णयति।

अन्वयः—अथ गिराम् उच्चारणज्ञः दारुकः उच्चारणत्पक्षिगणाः तटीः
धानं तं धरं द्रष्टुम् उत्कम् (अत एव) उत्कन्धरं शौरिम् अवेक्ष्य इति उवाच।

व्याख्या—अथ=रैवतकपर्वतमवलोक्य, भगवतः श्रीकृष्णस्य जातविस्मया-
न्तरम्। गिरां=वाक्यानाम्, उच्चारणं जानातीत्युच्चारणज्ञः=उक्तिकुशलः,
रुकः=श्रीकृष्णसारथिः, उच्चा=उन्नताः, रणन्त=कूजन्तः, पक्षिगणाः=
तत्रिसङ्घाः यासु ता उच्चारणत्पक्षिगणाः=उन्नतशब्दायमानपतत्रिसङ्घाः।
टीः=रोधांसि, दधानं=धारयन्तम्, तं=पूर्वोक्तम्, धरतीति धरस्तं धरं=शैलम्,
तकपर्वतमित्यर्थः ('महीध्रे शिखरि क्ष्माभृदहार्यधरपर्वताः। अद्रिगोत्रगिरि-
ावाचलशैलशिलोच्चयाः' इत्यमरः।) द्रष्टुम् अवलोकयितुम्, उत्कमुत्सुकम्
स्यादुत्क उन्मनाः" इत्यमरः।) अत एव, ऊर्ध्वं कन्धरा यस्य स तमुत्कन्धरम्=
तकपर्वतावलोकनोत्सुक्यादुन्नमितकन्धरं शौरिं=भगवन्तं श्रीकृष्णम्, अवेक्ष्य=
लोक्य, इति वक्ष्यमाणप्रकारेण, उवाच=कथयामास। अत्र यमकालङ्कारः,
जातिश्छन्दश्च।

समासः—उच्चारणं जानातीति उच्चारणज्ञः। उच्चारणन्तः पक्षिगणाः
सु ताः उच्चारणत्पक्षिगणाः। ऊर्ध्वं कन्धरा यस्य स, तम् उत्कन्धरम्।

भावार्थः—रैवतकपर्वतमवलोक्य भगवतः श्रीकृष्णस्य जातविस्मयानन्तरं
मी भगवतः श्रीकृष्णस्य सारथिर्दारुकः उन्नतशब्दायमानपतत्रिसङ्घयुक्त-
ांसि धारयन्तं तं रैवतकपर्वतमवलोकयितुमुत्कण्ठितं भगवन्तं श्रीकृष्णमेव-
च।

(८८) प्रश्नः—

उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम्।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम्॥

इति पद्यं देववाण्या व्याख्यायताम्। (१९८०)

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य
शुपालवध"महाकाव्यस्य चतुर्थाङ्कादुद्धृतमस्ति। अत्र कविः श्रीकृष्ण-
थिर्दारुकः श्रीकृष्णयोर्वार्तालापवर्णनप्रसङ्गे रैवतकपर्वतस्योच्चत्वं वर्णयति।

अन्वयः—विततोर्ध्वरश्मिरज्जौ अहिमरुचौ उदयति (तथा विततोर्ध्व-
श्मिरज्जौ) हिमधाम्नि च अस्तं याति अयं गिरिः विलम्बिघण्टाद्वयपरि-
तवारणेन्द्रलीलां वहति।

**व्याख्या**—वितताः=विस्तृता, ऊर्ध्वाश्च रश्मिरज्जवः, रश्मयः=किरणाः, रज्जव इव यस्य स विततोर्ध्वरश्मिरज्जुस्तस्मिन् विततोर्ध्वरश्मिरज्जौ=अतिविस्तृतोन्नतकिरणरूपरज्जौ। न हिमाः अहिमाः, अहिमाः रुचयो यस्य सोऽहिमरुचिस्तस्मिन् अहिमरुचौ=दिवाकरे, उदयति=उदिते सति, तथा च विततोर्ध्वरश्मिरज्जौ, हिमानि धामानि यस्य तद् हिमधाम, तस्मिन् हिमधाम्नि=सुधांशौ चन्द्रमसि इत्यर्थः। अस्तं याति=अस्तङ्गते सति, ("अस्तमदर्शने" इत्यमरः।) अयं=पुरतो दृश्यमानः, गिरिः=रैवतकपर्वतः, विलम्बिना=विशेषं लम्बमानेन घण्टाद्वयेन=किङ्किणीयुगलेन, परिवारितस्य=वेष्टितस्य, वारणेन्द्रस्य=गजराजस्य, लीलां=शोभामिति विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम्=विशेषतो लम्बमानघण्टायुगलवेष्टितगजराजशोभाम्। ("लीला केलिविलासयोः" इति मेदिनी।) वहति=धारयति। अत्र गिरेर्वारणेन्द्र उपमानम्, सूर्यचन्द्रमसोर्घण्टाद्वयम्, रश्मीनां च रज्जवः। अनेनैव कविना 'घण्टामाघ' इति नाम लब्धम्। अत्र लीलामिव लीलामिति सादृश्याक्षेपान्निदर्शनालङ्कारः। तथा च सूर्यचन्द्रमसावस्य कुक्षिसमानकक्षां बिभ्रत इति महदौन्नत्यं व्यज्यते। पुष्पिताग्रावृत्तम्—"अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति लक्षणात्।

**समासः**—रश्मयो रज्जव इवेति रश्मिरज्जवः, वितता ऊर्ध्वाश्च रश्मिरज्जवो यस्य सः विततोर्ध्वरश्मिरज्जुस्तस्मिन् विततोर्ध्वरश्मिरज्जौ। न हिमाः अहिमाः, अहिमाः रुचयो यस्य सोऽहिमरुचिस्तस्मिन् अहिमरुचौ। हिमानि धामानि यस्य तद् हिमधाम, तस्मिन् हिमधाम्नि। विलम्बि च तद् घण्टाद्वयं च विलम्बिघण्टाद्वयम्, विलम्बिघण्टाद्वयेन परिवारितः विलम्बिघण्टाद्वयपरिवारितः, स चासौ वारणेन्द्र इति विलम्बिघण्टाद्वयवारणेन्द्रः, विलम्बिघण्टाद्वयवारणेन्द्रस्य लीला विलम्बिघण्टाद्वयवारणेन्द्रलीला, तां विलम्बिघण्टाद्वयवारणेन्द्रलीलाम्।

**भावार्थः**—दारुको भगवन्तं श्रीकृष्णं प्रति कथयति यत्—अत्यन्तविस्तृतोन्नतकिरणरूपरज्जो दिवाकरस्योदये तथा चैतादृशस्यैव (अत्यन्तविस्तृतोन्नतकिरणरूपरज्जोः) चन्द्रमसोऽस्ते सति रैवतकपर्वतोऽयं विशेषतोऽधस्ताद् लम्बमानघण्टायुगलवेष्टित गजराजवच्छोभते।

(८९) **प्रश्नः**—

उत्क्षिप्तमुच्छ्रितसितांशुकरावलम्बैरुत्तम्भितोडुभिरतीवतरां शिरोभिः।
श्रद्धेयनिर्झरजलव्यपदेशमस्य विष्वक् तटेषु पतति स्फुटमन्तरिक्षम्॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं रगिरा व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य 'शिशुपालवध''महाकाव्यस्य चतुर्थसर्गादुद्धृतमस्ति । अत्र भगवता श्रीकृष्णेन ष्टे रैवतकपर्वते विस्मयान्विते च भगवति सति श्रीकृष्णसारथिर्दारुको भगवन्तं श्रीकृष्णम्प्रति कथयति—उत्क्षिप्तमिति ।

अन्वयः—उच्छ्रितसितांशुकरावलम्बैः उत्तम्भितोडुभिः शिरोभिः अतीव-राम् उत्क्षिप्तम् अन्तरिक्षं श्रद्धेयनिर्झरजलव्यपदेशम् अस्य तटेषु विष्वक् पतति इति ) स्फुटम् ।

व्याख्या—उच्छ्रिताः=उत्क्षिप्ताः, सितांशोः=चन्द्रमसः, करा=रश्मिरूपा सूर्यस्ताश्चावलम्बो येषां, तैः उच्छ्रितसितांशुकरावलम्बैः, उत्तम्भितानि=उत्तोलि-तानि, उडूनि=नक्षत्राणि, यैस्तानि उत्तम्भितोडूनि, तैः उत्तम्भितोडुभिः=उत्थापित-तथारागणैः, उडूनि चावष्टभ्येत्यर्थः । शिरोभिः=शिखरैर्मस्तकैश्चातीवतरां=भृश-ष्पिरम्, उत्क्षिप्तम्=उद्यम्य धृतम्, अन्तरिक्षं=गगनम्, ("नभोऽन्तरिक्षं गगनमनन्तं रवर्त्म खम् । वियद्विष्णुपदं वा तु पुंस्याकाशविहायसी" इत्यमरः । ) श्रद्धेयः=सादृश्याद्विश्वसनीयः, निर्झरजलमिति=निर्झरसलिलमिति, व्यपदेशो=व्यवहारो, स्य तत् श्रद्धेयनिर्झरजलव्यपदेशम्=दृढतरां निर्झरजलधियं कुर्वदित्यर्थः । अस्य=रैवतकपर्वतस्य, तटेषु=रोधस्सु, विष्वक्=परितः ( "समन्ततस्तु परितः सर्वतो विष्वगित्यपि" इत्यमरः । ) पतति=नीचैर्गच्छतीति, स्फुटम्=निश्चितम् । निर्झरजलव्याजेनाकाशमेवाधःपततीत्यर्थः । इन्दुकरानुडूनि चावष्टभ्य शिरोभि-ध्रियमाणमपि दुरुद्धरत्वाद् भ्रश्यदन्तरीक्षमेवेदं न तु जलम् । सादृश्यात्तु व्यपदेशो र इति सर्वतः पतिता, निर्झरजलं चोत्प्रेक्ष्यते । तेनोत्सेधविस्तारावस्य ज्येते । अत्रोत्प्रेक्षालङ्कारः, वसन्ततिलकावृत्तम् ।

समासः—सितांशोः कराः सितांशुकराः, उच्छ्रिताः ते सितांशुकराः च्छ्रितसितांशुकराः । अवलम्बो येषां ते उच्छ्रितसितांशुकरावलम्बास्तैः उच्छ्रित-तांशुकरावलम्बैः । उत्तम्भितानि उडूनि यैस्तानि उत्तम्भितोडूनि, तैरुत्तम्भि-डुभिः । ऊर्ध्वं क्षिप्तमुत्क्षिप्तम् । श्रद्धेयः निर्झरजलमिति व्यपदेशो यस्य तत् द्धेयनिर्झरजलव्यपदेशम् ।

भावार्थः—ऊर्ध्वमुत्क्षिप्तचन्द्रकिरणरूपकरावलम्बैः, उत्तोलितनक्षत्रगणैः खरस्वरूपमस्तकैरुद्यम्य धृतं गगनम्, समानवर्णत्वान्निर्झरसलिलवत् प्रतीय-नः रैवतकपर्वतस्यास्य तटेषु परितः पततीव दृश्यते ।

( ६० ) प्रश्नः—

इतस्ततोऽस्मिन् विलसन्ति मेरोः समानवप्रे मणिसानुरागाः ।
स्त्रियश्च पत्यौ सुरसुन्दरीभिः समानवप्रेमणि सानुरागाः ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं देववाण्या व्याख्यायताम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य चतुर्थसर्गादुद्धृतमस्ति । अत्र भगवता श्रीकृष्णेन दृष्टे रैवतकपर्वते विस्मयान्विते च भगवति सति श्रीकृष्णसारथिर्दारुको भगवन्तं श्रीकृष्णम्प्रति कथयति—इतस्तत इति ।

अन्वयः—मेरोः समानवप्रे (अत एव–) अस्मिन् इतस्ततः मणिसानुरागाः विलसन्ति (किञ्च–) नवप्रेमणि पत्यौ सानुरागाः सुरसुन्दरीभिः समाः स्त्रियः च इतस्ततः विलसन्ति ।

व्याख्या—मेरोः=रत्नसानोः, सुमेरुपर्वतस्येत्यर्थः । ( "मेरुः सुमेरुः हेमाद्री रत्नसानुः सुरालयः" इत्यमरः । ) समानं=सदृशं, वप्रं=तटम्, यस्य सः समानवप्रस्तस्मिन् समानवप्रे । ( "वप्रस्ताते पुमानस्त्री रेणौ क्षेत्रे चये तटे" इति मेदिनी ।) अत एवेति शेषः । अस्मिन्=रैवतकपर्वते । इतस्ततः=अत्रामुत्र, मणिमया सानवो मणिसानवस्तेषां रागाः मणिसानुरागाः=रत्नतटकान्तयः, विलसन्ति=प्रसरन्ति । किञ्च–नवं=नूतनं, प्रेम=स्नेहः, यस्य तत् नवप्रेम, तस्मिन् नवप्रेमणि पत्यौ=भर्तरि ( "धवः प्रियः पतिर्भर्ता" इत्यमरः । ), अनुरागेण=प्रेम्णा, सह वर्तमाना सानुरागाः=प्रीतियुक्ताः, सुराणां=देवानां, सुन्दर्यः=नार्यः, इति सुरसुन्दर्यस्ताभिः सुरसुन्दरीभिः=देवाङ्गनाभिः, समाः=सरूपाः, स्त्रियः=नार्यश्च, इतस्ततः, विलसन्ति=क्रीडन्ति । अन्योऽन्यमनुरागिणोऽनुरूपाश्चेह विलासिनस्तदनुरूपाणि च विहारस्थलानि सन्तीति भावः । अत्र यमकालङ्कारः, उपेन्द्रवज्रावृत्तम् ।

समासः—समानं वप्रं यस्य सः समानवप्रस्तस्मिन् समानवप्रे । मणिमयाः सानवो मणिसानवस्तेषां रागाः मणिसानुरागाः । अनुरागेण सह प्रवर्तमानाः सानुरागाः । नवं प्रेम यस्मिन् तत् नवप्रेम, तस्मिन् नवप्रेमणि । सुराणां सुन्दर्यः सुरसुन्दर्यस्ताभिः सुरसुन्दरीभिः ।

भावार्थः—सुमेरुवत्तटयुक्तेऽस्मिन् रैवतकपर्वते मणिमयशिखरकान्तय इतस्ततः प्रसरन्ति तथा च नवीनस्नेहवति पत्यौ सानुरागाः देवाङ्गनावत् सुन्दर्यः स्त्रियोऽप्यत्रामुत्र क्रीडन्ति ।

( ८१ ) प्रश्नः—

अयमतिजरठाः प्रकामगुर्वीरलघुविलम्बिपयोधरोपरुद्धाः ।
सततमसुमतामगम्यरूपाः परिणतदिक्करिकास्तटीर्बिभर्ति ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देश-
हितं सुरगिरा व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य
"शिशुपालवध"महाकाव्यस्य चतुर्थसर्गादुद्धृतमस्ति । अत्र भगवता श्रीकृष्णेन
ष्टे रैवतकपर्वते, विस्मयान्विते च भगवति सति श्रीकृष्णसारथिर्दारुको भगवन्तं
कृष्णम्प्रति कथयति—अयमतीति ।

अन्वयः—अयम् अतिजरठाः प्रकामगुर्वीः अलघुविलम्बिपयोधरोपरुद्धाः
ततम् असुमताम् अगम्यरूपाः परिणतदिक्करिकाः तटीः बिभर्त्ति ।

व्याख्या—अयं=गिरिः, रैवतकपर्वत इत्यर्थः । अतिशयेन जरठाः अति-
रठाः=अतिकठिनाः, अतिजरतीश्च । ("जरठः कठिने जीर्णे" इति वैजयन्ती ।)
कामं गुर्व्यः=श्रेष्ठाः, स्थौल्याद् दुर्भराः इति प्रकामगुर्व्यस्ताः प्रकामगुर्वीः ।
"गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे" इति शब्दार्णवः । ) न लघवोऽल-
वः=वृहतः, अलघवश्च ते विलम्बिनः अलघुविलम्बिनः, अलघुविलम्बिनश्च
पयोधराः=मेघाः, स्तनाश्च ( स्त्रीस्तनाब्दौ पयोधरौ" इत्यमरः । ) अलघु-
विलम्बिपयोधरास्तैरुपरुद्धा आवृतास्ताः अलघुविलम्बिपयोधरोपरुद्धा=वृहद्-
लम्बमानमेघावृताः, पक्षान्तरे—वृहद्लम्बमानस्तननिबद्धाः । सततं=निरन्तरम्,
असुमताम्=जीवधारिणाम्, न गम्या अगम्याः, सुष्ठु अगम्या इति अगम्यरूपाः,
यद्वा अगम्यं रूपं यासां ता अगम्यरूपाः=अत्युन्नतत्वाद् दुरारोहस्वरूपाः;
क्षे—वृद्धत्वाद् गमनानर्हविग्रहाः, "त्यजेदन्त्यकुलोत्पन्नां वृद्धां स्त्रीं कन्यकां
या" इति गमननिषेधादिति भावः । परिणतास्तिर्यग्दन्तप्रहारिणो, दिक्-
रिणो=दिग्गजाः यासु ताः परिणतदिक्करिकाः । ( "तिर्यग्दन्तप्रहारस्तु गजः
रिणतो मतः" इति हलायुधः । ) अन्यत्र—परिणताः=किणीभूताः, दिशो=
तक्षतविशेषाः, कारिकाः नखव्रणाश्च यासां ताः परिणतदिक्करिकाः ।
"दिग्दष्टे वर्तुलाकारे कारिका=नखरेखिका" इति वैजयन्ती । ) तटीः=
धांसि, बिभर्त्ति=धारयति । अत्र प्रकृततटीविशेषणमहिम्ना अप्रकृतवृद्धाङ्गना-
तीतेः समासोक्तिरलङ्कारः । अत्र पुष्पिताग्रावृत्तम् ।

समासः—अतिशयेन जरठाः अतिजरठाः । प्रकामं गुर्व्यः इति प्रकामगुर्व्यः,
: प्रकामगुर्वीः । न लघवः अलघवः, अलघवश्च ते विलम्बिन इति अलघुविल-

म्बिनः, अलघुविलम्बिनश्च ते पयोधराः अलघुविलम्बिपयोधरास्तैरुपरुद्धा इति अलघुविलम्बिपयोधरोपरुद्धास्ताः अलघुविलम्बिपयोधरोपरुद्धाः । न गम्या अगम्याः, सुष्ठु अगम्याः इति अगम्यरूपाः । अथवा—अगम्यं रूपं यासां ताः अगम्यरूपाः । परिणताः दिक्करिकाः यासु ताः परिणतदिक्करिकाः । अन्यत्र—परिणताः दिशः कारिकाश्च यासु ताः परिणतदिक्करिकाः ।

भावार्थः—श्रीकृष्णसारथिर्दारुको भगवन्तं श्रीकृष्णम्प्रति कथयति यत् रैवतकपर्वतोऽयमतिकठोराः, अत्युन्नताः, वृहद्लम्बमानमेघावृताः, अत्युन्नतात्वाद् दुरारोहस्वरूपत्वाच्च जीवधारिणां सर्वथाऽगम्याः (गन्तुमयोग्यः) तिर्यग्दन्तप्रहारिगजयुक्तास्तटीः, अतिजरतीः, अतिस्थूलाः, वृद्धावस्थात्वाद् वृहद्लम्बमानस्तननिवद्धाः, अतिवृद्धत्वाद् दीर्घजीविनां पुरुषाणां गमन( सुरत )क्रियानर्हविग्रहाः, किणीभूतपुरुषकृतदन्तक्षतविशेषनखव्रणाः वृद्धस्त्रिय इव धारयति ।

( ६२ ) प्रश्नः—

धूमाकारं दधति पुरः सौवर्णे वर्णेनाग्नेः सदृशि तटे पश्यामी ।
श्यामीभूताः कुसुमसमूहेऽलीनां लीनामालीमिह तरवो बिभ्राणाः ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशसहितं संस्कृतभाषया व्याख्यायताम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य चतुर्थसर्गादुद्धृतम् । अत्र भगवता श्रीकृष्णेन दृष्टे रैवतकपर्वते विस्मयान्विते च भगवति सति श्रीकृष्णसारथिर्दारुकः भगवन्तं श्रीकृष्णम्प्रति कथयति—धूमाकारमिति ।

अन्वयः—इह पुरः वर्णेन अग्नेः सदृशि सौवर्णे तटे कुसुमसमूहे लीनाम् अलीनां विभ्राणाः ( अत एव ) श्यामीभूताः अमी तरवः धूमाकारं दधति ( इति त्वं ) पश्य ।

व्याख्या—इह अस्मिन् रैवतकपर्वते, पुरः=अग्रे, वर्णेन=रङ्गेन, अग्नेः=वह्नेः सदृशि=तुल्ये, अग्निसमानवर्णे इत्यर्थः । सौवर्णे=सुवर्णमये, तटे=कूले, ("कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु" इत्यमरः । ) कुसुमानां=पुष्पाणां, समूहः=गुच्छः, कुसुमसमूहस्तस्मिन् कुसुमसमूहे । लीनाम्=स्थिताम्, अलीनाम्=भृङ्गाणाम्, आलीम्=आवलीं श्रेणीमित्यर्थः । ( "वीथ्यालिरावलिः पङ्क्तिः श्रेणी" इत्यमरः । ) बिभ्राणाः=धारयन्तः, अत एव—अश्यामाः श्यामाः सम्पद्यमानाः इति श्यामीभूताः=कृष्णीभूताः, अमी=एते, पुरतो दृश्यमाना इत्यर्थः । तरवः=

वृक्षाः, ("वृक्षो महीरुहः शाखी विटपी पादपस्तरुः । अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः" इत्यमरः । ) धूमस्य आकारो धूमाकारस्तं धूमाकारं=धूमसाम्यं, दधति=धारयति. इति त्वं पश्य=अवलोकय । अत्र सौवर्णं तटमग्निवद् भाति, श्यामास्तरवो धूमवद् भान्तीत्युपमालङ्कारः । जलधरमालावृत्तम्—"अब्ध्यङ्गैः स्याज्जलधरमाला म्भौ स्मौ" इति लक्षणात् ।

समासः—कुसुमानां समूहः कुसुमसमूहस्तस्मिन् कुसुमसमूहे । अश्यामाः श्यामाः सम्पद्यमाना इति श्यामीभूताः । धूमस्य आकारः धूमाकारस्तं धूमाकारम् ।

भावार्थः—श्रीकृष्णसारथिर्दारुको भगवन्तमाह—अस्मिन् रैवतकपर्वते पुरः अग्निसदृशवर्णे सुवर्णमयतटे पुष्पपुच्छे गुप्तान् भ्रमरसमूहान् धारयन्त अत एव वृक्षा इमे धूमसादृश्यं दधति । सौवर्णं तटमग्निवद् भाति, श्यामास्तरवो धूमवद् शोभन्ते इति पश्यन्तु तावद् भवान् ।

( ८३ ) प्रश्नः—

व्योमस्पृशः पृथयता कलधौतभित्तीरुन्निद्रपुष्पचणचम्पकपिङ्गभासः ।
सौमेरवीमधिगतेन नितम्बशोभामेतेन भारतमिलावृतवद् विभाति ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा विवृणुत ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य चतुर्थसर्गादुद्धृतमस्ति । अत्र श्रीकृष्णसारथिर्दारुको भगवन्तं श्रीकृष्णम्प्रति रैवतकपर्वतवर्णनप्रसङ्गे पर्वतेनानेन भारतशोभां वर्णयति ।

अन्वयः—व्योमस्पृशः उन्निद्रपुष्पचणचम्पकपिङ्गभासः कलधौतभित्तीः पृथयता (अत एव) सौमेरवीं नितम्बशोभाम् अधिगतेन एतेन भारतम् इलावृतवद् विभाति ।

व्याख्या=व्योम स्पृशन्तीति व्योमस्पृशः=आकाशस्पर्शिनः, अभ्रङ्कषाः, उन्निद्रैः=विकसितैः, पुष्पैः=कुसुमैर्वित्ताः=प्रतीताः इति उन्निद्रपुष्पचणाः, ते च ते चम्पकाश्चेति उन्निद्रपुष्पचणचम्पकाः, तैस्तेषामिव वा पिङ्गाः भासो यासां ताः उन्निद्रपुष्पचणचम्पकपिङ्गभासः=विकसितपुष्पप्रतीतचम्पकवत् पीतवर्णाः, कलधौतस्य=स्वर्णस्य ("कलधौतं रौप्यहेम्नोः" इत्यमरः ।), भित्तयः=तट्यः, कलधौतभित्तयस्ताः कलधौतभित्तीः, पृथयता=प्रकटयता, विस्तारयतेति वा, अत एव, सुमेरो इयं सौमेरवी, तां सौमेरवीं=सुमेरुपर्वतसम्बन्धिनीम्, नितम्बस्य शोभा नितम्बशोभाम्=कटकलक्ष्मीम्, मध्यभागशोभामित्यर्थः, क्वचिद् नितम्ब-

शोभामित्यस्य स्थाने निकुञ्जशोभामिति पाठान्तरे—गहनप्रदेशलक्ष्मीमित्यर्थः। अधिगतेन=प्राप्तवता, एतेन=रैवतकपर्वतेन, भारतम्=भारतवर्षमित्यर्थः। ( "वर्षं स्थानं विदुः प्राज्ञा इमं लोकं च भारतम्" इति भारविः। "लोकोऽयं भारतं वर्षम्" इत्यमरश्च। ) इलावृतवद्=इलावृतवर्षमिव, नवखण्डस्य= जम्बूद्वीपस्य, हिमाद्रेर्दक्षिणभूखण्डं हैमवतापरनामकं भारतवर्षं सुमेरुयोगात् सौमेरवापराख्यं मध्यमखण्डमिलावृतवर्षम्। तथा चोक्तं वैजयन्त्याम्—

'नाम्नेदं भारतं वर्षं हिमाद्रेस्तच्च दक्षिणे।
तेन हैमवतं नाम परेष्वप्येवमुन्नयेत्॥
इलावृतं सौमेरवं सुमेरोः परितो हि तत्।' इति।

इलावृत्तमिदं जम्बूद्वीपस्य नवमभागः, भारतवर्षश्च प्रथमो भागः। तथा चेलावृतवर्षं हिमालयस्य मध्यभागे स्थितम्, तन्मध्यभागे सुमेरुपर्वतः स्थितोऽस्ति। उक्तञ्च श्रीवाचस्पतिमिश्रेण—

'स्याद् भारतं किम्पुरुषं हरिवर्षं च दक्षिणाः।
रम्यं हिरण्मयकुरू हिमाद्रेरुत्तरास्त्रयः॥
भद्राश्वकेतुमालौ तु द्वौ वर्षौ पूर्वपश्चिमौ।
इलावृतं तु मध्यस्थं सुमेरुर्यत्र तिष्ठति॥'

इलावृतवद् विभातीत्यत्रोपमालङ्कारः। वसन्ततिलकावृत्तम्।

**समासः**—व्योम स्पृशन्तीति व्योमस्पृशः, ताः व्योमस्पृशः। उन्निद्राणि च तानि पुष्पाणि उन्निद्रपुष्पाणि, तैर्वित्ताः उन्निद्रपुष्पचणाः अथवा उन्निद्रैः पुष्पैः वित्ताः उन्निद्रपुष्पचणाः, ( अत्र "तेन वित्तश्चुञ्चुप्चणपौ" ( ५।२।२६ ) इति सूत्रेण वित्तेऽर्थे चणप् प्रत्ययः। ) उन्निद्रपुष्पचणाश्च ते चम्पकाश्चेति उन्निद्रपुष्पचणचम्पकाः, तैस्तेषामिव वा पिङ्गाः भासो यासां ताः उन्निद्रपुष्पचणचम्पकपिङ्गभासः। कलधौतस्य भित्तयः कलधौतभित्तयः, ताः कलधौतभित्तीः। सुमेरोरियं सौमेरवी, तां सौमेरवीम्। नितम्बस्य शोभा नितम्बशोभा, तां नितम्बशोभाम्। इलावृतेन तुल्यं इलावृतवत्।

**भावार्थः**—श्रीकृष्णसारथिर्दारुको भगवन्तं श्रीकृष्णम्प्रति कथयति यत्—आकाशस्पृश विकसितपुष्पचम्पकवत् पीतवर्णकान्तीः कनकमयतटीर्विस्तारयता अत एव सुमेरुपर्वतस्य मध्यभागस्य शोभां प्राप्तेन पर्वतेनानेनेदं भारतवर्षं हिमालयस्य मध्यभागे, सुमेरुपर्वतं परितः स्थितं देवभूमिविशेषं इलावृतवर्षमिव शोभते।

( ९४ ) प्रश्नः—

विद्वद्भिरागमपरैर्विवृतं कथञ्चिच्छ्रुत्वाऽपि दुर्ग्रहमनिश्चितधीभिरन्यैः।
श्रेयान् द्विजातिरिव हन्तुमघानि दक्षं गूढार्थमेष निधिमन्त्रगणं बिभर्ति॥

इति पद्यं छन्दःकोशसन्दर्भसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा विवृणुत। ( १९७९ )

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य चतुर्थसर्गादुद्धृतमस्ति। अत्र भगवता श्रीकृष्णेन दृष्टे रैवतकपर्वते विस्मयान्विते च भगवति श्रीकृष्णसारथिर्दारुको भगवन्तम्प्रति रैवतकं वर्णयति।

अन्वयः—एषः श्रेयान् द्विजातिः इव आगमपरैः विद्वद्भिः कथञ्चित् विवृतम् अनिश्चितधीभिः अन्यैः श्रुत्वा अपि दुर्ग्रहम् अघानि हन्तुं दक्षं गूढार्थं निधिमन्त्रगणं बिभर्ति।

व्याख्या—एषः=अयं रैवतकपर्वतः, श्रेयान्=श्रेष्ठः, द्विजातिः=ब्राह्मणः, इव=यथा, आगमो=निधिकल्पः मन्त्रशास्त्रं च, स एव परं=प्रधानं येषां ते आगमपरास्तैः आगमपरैः=तालशास्त्र( भूगर्भविद्या )प्रवीणैः, शास्त्रसिद्धान्तनिष्ठैश्च। विद्वद्भिर्निधीनां मन्त्राणां च साधनविधानज्ञैः, कथञ्चित्=अतिकाठिन्येन, विवृतम्=स्वरूपतः प्रकाशितम्। नास्ति निश्चिता इदमित्थमिति निश्चयात्मिका धीर्बुद्धिर्येषां तैरनिश्चितधीभिरन्यैरतालज्ञैरशास्त्रज्ञैश्च, श्रुत्वाऽपि=आकर्ण्यापि, 'इह निधिरस्ति, ईदृङ्महिमा असौ मन्त्र इति चाप्तमुखादाकर्ण्यापीत्यर्थः। दुःखेनापि ग्रहीतुमशक्यं दुर्ग्रहम्=दुःसाधनम्, अघानि=दुःखान्येनांसि च, हन्तुं=विध्वंसयितुम्, दक्षम्=समर्थम्। ( "दुःखैनों व्यसनेष्वघम्" इति वैजयन्ती। ) गूढः=संवृतः, अर्थः=धनं अभिधेयं च यस्मिस्तं गूढार्थम्=गुप्तधनम्, संवृताभिधेयञ्च, निधयो=मन्त्रा इव अथवा निधय इव मन्त्राः निधिमन्त्राः, तेषां गणः निधिमन्त्रगणस्तं निधिमन्त्रगणं=शेवधिमन्त्रसमूहम्, ( "निधिर्ना शेवधिः" इत्यमरः। ) बिभर्ति=धारयति। द्विजातिर्मन्त्रगणमिव निधिगणमेष बिभर्तीत्यर्थः। अत्रोपमालङ्कारः, वसन्ततिलकावृत्तम्।

समासः—आगम इव परं प्रधानं येषां ते आगमपरास्तैः आगमपरैः। नास्ति निश्चिता ( इदमित्थमिति निश्चयात्मिका ) धीर्येषां ते अनिश्चितधियस्तैः अनिश्चितधीभिः। दुःखेनापि ग्रहीतुमशक्यं दुर्ग्रहम्। निधयो मन्त्रा इव अथवा निधय इव मन्त्राः निधिमन्त्राः, तेषां गणः निधिमन्त्रगणस्तं निधिमन्त्रगणम्।

भावार्थः—अयं रैवतकपर्वतः श्रेष्ठब्राह्मणवद् भूगर्भविद्यायां मन्त्रशास्त्रे च तत्परैर्विद्वद्भिरतीव काठिन्येन स्वरूपतः प्रकाशितम्, तथा च चञ्चलबुद्धिभिः श्रुत्वाऽप्यगम्यम्, दुःखानि पापानि च विध्वंसयितुं समर्थम्, गुप्तधनं संवृताभिधेयमिति च, मन्त्रसमूहवत् निधीः निधिरूपान् मन्त्रसमूहान् धारयतीत्यर्थः।

( ८५ ) प्रश्नः—

अनतिचिरोज्झितस्य जलदेन चिरस्थितबहुबुद्बुदस्य पयसोऽनुकृतिम्।
विरलविकीर्णवज्रशकला सकलामिह विदधाति धौतकलधौतमही ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं देववाण्या व्याख्यायताम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य चतुर्थसर्गादुद्धृतमस्ति। अत्र भगवता श्रीकृष्णेन दृष्टे रैवतकपर्वते विस्मयान्विते च भगवति श्रीकृष्णसारथिर्दारुको भगवन्तम्प्रति रैवतकं वर्णयति।

अन्वयः—इह विरलविकीर्णवज्रशकला धौतकलधौतमही जलदेन अनतिचिरोज्झितस्य चिरस्थितबुद्बुदस्य पयसः सकलाम् अनुकृतिं विदधाति।

व्याख्या—इह=अस्मिन् रैवतकपर्वते, विरलं यथा तथा विकीर्णाः=प्रसरणशीलाः, वज्रशकलाः=श्वेतहीरकखण्डानि, यस्यां सा विरलविकीर्णवज्रशकला=पृथक्पृथक्प्रसरणशीलश्वेतहीरकखण्डाः। कलधौतस्य=रजतस्य, ( "कलधौतं रूप्यहेम्नोः" इति विश्वः। ) मही=भूमिः, कलधौतमही, धौता=शुभ्रा, चासौ कलधौतमही, धौतकलधौतमही=शुभ्ररजतभूमिः, जलदेन=मेघेन, न अतिचिरम् अनतिचिरम्, अनतिचिरम् उज्झितमिति अनतिचिरोज्झितम्, तस्य अनतिचिरोज्झितस्य=तत्कालवृष्टस्य, शुभ्रस्येति भावः। चिरं स्थिताः=चिरस्थिताः, चिरस्थायिनो बहवो बुद्बुदाः=जलस्फोटाः, यस्मिन् तत् चिरस्थितबुद्बुदम्, तस्य चिरस्थितबुद्बुदस्य=चिरकालस्थायिबहुजलस्फोटस्येत्यर्थः। पयसः=सलिलस्य, जलस्येत्यर्थः। सकलाम्=सम्पूर्णाम्, अनुकृतिं=साम्यम्, विदधाति=करोति। अत्र मेघोज्झितजलस्य स्थिरबुद्बुदासम्बन्धेऽपि सम्भावनया सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः। कुररीवृत्तम्—"कुररीरुता नजभजैर्लगयुक्" इति लक्षणात्।

समासः—विरलं यथा तथा विकीर्णाः वज्रशकलाः यस्यां सा विरलविकीर्णवज्रशकला। कलधौतस्य मही कलधौतमही, धौता चासौ कलधौतमही धौतकलधौतमही। न अतिचिरम् अनतिचिरम्, अनतिचिरम् उज्झितम् इति

अनतिचिरोज्झितम्, तस्य अनतिचिरोज्झितस्य। चिरं स्थिताः चिरस्थिताः, चिरस्थिताः बहवो बुद्बुदाः यस्मिन् तत् चिरस्थितबुद्बुदम्, तस्य चिरस्थितबुद्बुदस्य।

भावार्थः—पर्वतेऽस्मिन् पृथक्-पृथक्-विकीर्णहीरकखण्डा शुभ्ररजतभूमिः मेघैस्तत्कालवृष्टस्य चिरकालस्थायिबहुजलस्फोटस्य सलिलस्य साम्यं धारयति अर्थात् रजतमयशुभ्रभूमौ विस्तृता हीरकखण्डाः मेघैस्तत्कालवृष्टस्य जलस्य चिरस्थायिबहुजलस्फोटस्येव शोभन्ते इति भावः।

( ८६ ) प्रश्नः—

भिन्नेषु रत्नकिरणैः किरणेष्विहेन्दो-
उच्चावचैरुपगतेषु सहस्रसंख्याम्।
दोषाऽपि नूनमहिमांशुरसौ किलेति
व्याकोशकोकनदतां दधते नलिन्यः॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं संस्कृतभाषया व्याख्यायताम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य चतुर्थसर्गादुद्धृतमस्ति। अत्र भगवता श्रीकृष्णेन दृष्टे रैवतकपर्वते, विस्मयान्विते च भगवति श्रीकृष्णसारथिर्दारुको भगवन्तं प्रति रैवतकं वर्णयति।

अन्वयः—इह इन्दोः किरणेषु उच्चावचैः रत्नकिरणैः भिन्नेषु ( अतएव ) सहस्रसंख्याम् उपगतेषु नलिन्यः असौ नूनम् अहिमांशुः किल, इति दोषा अपि व्याकोशकोकनदतां दधते।

व्याख्या—इह=अस्मिन् रैवतकपर्वते, इन्दोः=चन्द्रमसः, किरणेषु=रश्मिषु; उदञ्चश्चावञ्चश्चेति ते उच्चावचास्तैरुच्चावचैः=अनेकविधैरित्यर्थः। ( "उच्चावचं नैकभेदम्" इत्यमरः। ) रत्नानां=मणीनां, किरणाः=मयूखास्तैः रत्नकिरणैः। भिन्नेषु=मिश्रितेषु, ( अत एव ) सहस्रपरिमिता संख्या सहस्रसंख्या, तां सहस्रसंख्याम्=सहस्रत्वमुपगतेषु=प्राप्तेषु सत्सु, नलिन्यः=पद्मिन्यः, ("नलं पद्मे नलं तृणम्" इत्यमरः। ) असौ=प्रकाशमानोऽयम्, नूनम्=वस्तुतः, न विद्यन्ते हिमाः अंशवो यस्य सोऽहिमांशुः=भास्करः, सूर्य इत्यर्थः। किलेति, सहस्रकिरणत्वात् सूर्य एवेति सम्भावनाबुद्ध्येत्यर्थः। ( "वार्तासम्भाव्ययोः किल" इत्यमरः। ) इतीति हेतौ। दोषाऽपि=रजन्यमपि। सप्तम्यर्थेऽव्यय-

मिदम् । ( "दिवाऽह्नीत्यर्थे दोषा च नक्तं च रजनौ" इत्यमरः । ) व्याकोशं चासौ कोकनदं च व्याकोशकोकनदम्, तस्य भावः व्याकोशकोकनदता, तां व्याकोशकोकनदताम्=स्फुटरक्तोत्पलत्वम् । ( "अथ रक्तसरोरुहम् । रक्तोत्पलं कोकनदम्" इत्यमरः । "व्याकोशविकचस्फुटाः" इत्यमरः । दधते=धारयन्ति । कमलिन्यः रात्रावपि विकसितरक्तकमलत्वमाप्नुवन्तीति तात्पर्यम् । इह देवभूमित्वान्नित्यपद्मा नलिन्य इति भावः । इह नलिनीनां दोषातनविकासासम्बन्धेऽपि तत्सम्बन्धरूपयाऽतिशयोक्त्या तस्येन्दावर्कभ्रान्तिनिमित्तोत्प्रेक्षया भ्रान्तिमानलङ्कारो व्यज्यते । वसन्ततिलकावृत्तम् ।

**समासः**—उदञ्चश्चावञ्चश्च ते उच्चावचाः, तैरुच्चावचैः । रत्नानां किरणाः रत्नकिरणास्तैः रत्नकिरणैः । सहस्रपरिमिता संख्या सहस्रसंख्या, तां सहस्रसंख्याम् । न विद्यन्ते हिमाः अंशवो यस्य सोऽहिमांशुः । व्याकोशं चासौ कोकनदं च व्याकोशकोकनदम्, तस्य भावः व्याकोशकोकनदता, तां व्याकोशकोकनदताम् ।

**भावार्थः**—श्रीकृष्णसारथिर्दारुको भगवन्तं श्रीकृष्णमुवाच यत्—रैवतकपर्वतेऽस्मिन् सुधांशुकिरणेष्वनेकविधरत्नकिरणैर्मिश्रितत्वात् सहस्रसंख्यात्वं प्राप्तेषु सत्सु 'निश्चितरूपेणायं दिवाकर' इति मत्वा पद्मिन्यो रात्रावपि विकसितरक्तपद्मत्वमाप्नुवन्ति ।

( ९७ ) **प्रश्नः**—

मधुकरविटपानमितास्तरुपङ्क्तीर्बिभ्रतोऽस्य विटपानमिताः ।
परिपाकपिशङ्गलतारजसा रोधश्चकास्ति कपिशं गलता ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं देववाण्या व्याख्यायताम् ।

**उत्तरम्**—**सन्दर्भः** प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य चतुर्थसर्गादुद्धृतमस्ति । अत्र भगवता श्रीकृष्णेन दृष्टे रैवतकपर्वते विस्मयान्विते च भगवति श्रीकृष्णसारथिर्दारुको भगवन्तम्प्रति रैवतकं वर्णयति ।

**अन्वयः**—मधुकरविटपानम् इताः विटपानमिताः तरुपङ्क्तीः बिभ्रतः, अस्य रोधः गलता परिपाकपिशङ्गलतारजसा कपिशं चकास्ति ।

**व्याख्या**—मधुकराः=भ्रमरा एव, विटाः=मधुकरविटाः, तेषां पानं मधुकरविटपानम्, तत् मधुकरविटपानम्=भ्रमरविटचुम्बनम् । इताः=प्राप्ताः ।

विटपैः=शाखाविस्तारैः, ("विस्तारो विटपोऽस्त्रियाम्" इत्यमरः।) आनमिताः=नम्रीभूताः इति विटपानमिताः=शाखाविस्तारनम्रीभूता इत्यर्थः। तरूणां=वृक्षाणां, पङ्क्तयः=श्रेण्यः, तरुपङ्क्तयस्ताः तरुपङ्क्तीः=वृक्षश्रेणीरित्यर्थः, बिभ्रतो=धारयतः। अस्य पुरतो दृश्यमानस्य रैवतकपर्वतस्य, रोधः=तटम्, नितम्बो मध्यभाग इत्यर्थः। गलता=पतता। परिपाकेण=परिणामेन, पिशङ्गीनां=पिङ्गलवर्णानां, लतानां=व्रततीनां, ("वल्ली तु व्रततिर्लता" इत्यमरः।) रजः=रेणुरिति परिपाकपिशङ्गलतारजसा=परिणामपीतव्रततिरेणुना। कपिशं=पिङ्गलवर्णम्। ("कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ" इत्यमरः।) चकास्ति=विराजते। मात्रावृत्तेष्वत्र आर्यागीतिवृत्तम्—"अर्थे वसुगणा आर्यागीतिः" (पिङ्गलनाग) इत्युक्तेः—"आर्या पूर्वार्द्धं यदि गुरुणैकेनाधिकेन निधने युक्तम्। इतरस्तद्वन्निखिलं दलं यदीयमुदितेयमार्यागीति"रिति वृत्तरत्नाकरोक्तेश्च।

समासः—मधुकरा एव विटाः मधुकरविटाः, तेषां पानं मधुकरविटपानम्, तत् मधुकरविटपानम्। विटपैरानमिताः विटपानमिताः। तरूणां पङ्क्तयः तरुपङ्क्तयस्ताः तरुपङ्क्तीः। परिपाकेण पिशङ्गीनां लतानां रज इति परिपाकपिशङ्गलतारजसा।

भावार्थः—भ्रमररूपीविटैः पीताः (चुम्बिताः) वृक्षशाखाविस्तारैर्नम्रीभूताः वृक्षश्रेणीः धारयतोऽस्य रैवतकपर्वतस्य तटम्, पतता पाकेन पीतवर्णवल्लरीरेणुना पिङ्गलवर्णं शोभते।

(९८) प्रश्नः—

दधति च विकसद्विचित्रकल्पद्रुमकुसुमैरभिगुम्फितानिवैताः।
क्षणमलघुविलम्बिपिच्छदाम्नः शिखरशिखाः शिखिशेखरानमुष्य॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा विवृणुत।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य चतुर्थसर्गादुद्धृतमस्ति। अत्र भगवता श्रीकृष्णेन दृष्टे रैवतकपर्वते विस्मयान्विते च भगवति श्रीकृष्णसारथिर्दारुको भगवन्तम्प्रति रैवतकं वर्णयति।

अन्वयः—च अमुष्य एताः शिखरशिखाः विकसद्विचित्रकल्पद्रुमकुसुमैः अभिगुम्फितान् इव (स्थितान्) अलघुविलम्बिपिच्छदाम्नः शिखिशेखरान् क्षणं दधति।

व्याख्या—अमुष्य=अस्य रैवतकपर्वतस्य, एताः=पुरतो दृश्यमानाः, शिखराणि=शृङ्गाण्येव, शिखाः=केशपाश्य, इति शिखरशिखाः=शृङ्गकेशपाश्यः, शिखररूपकेशचूडा इत्यर्थः। ("शिखा चूडा केशपाशी" इत्यमरः।) कल्पद्रुमस्य कुसुमानि=पुष्पाणि, इति कल्पद्रुमकुसुमानि, विकसन्ति च तानि विचित्राणि=नानावर्णानि, इति विकसद्विचित्राणि, विकसद्विचित्राणि च तानि कल्पद्रुमकुसुमानीति विकसद्विचित्रकल्पद्रुमकुसुमानि, तैर्विकसद्विचित्रकल्पद्रुमकुसुमैः=विकसन्नानावर्णकल्पवृक्षपुष्पैरित्यर्थः। अभिगुम्फितान् इव ग्रथितानिवेत्युत्प्रेक्षा। स्थितानिति शेषः। अलघूनि विलम्बीनि=लम्बमानानि च तानि पिच्छानि इति अलघुविलम्बिपिच्छानि, तान्येव दामानि=स्रजो, येषु ते अलघुविलम्बिपिच्छदामानः, तान् अलघुविलम्बिपिच्छदाम्नः=विशाललम्बमानमयूरपुच्छस्रजः। शिखिनः=बर्हिणः, मयूरा इत्यर्थः; इव शेखराः=आपीडा; शिरोभूषणा इत्यर्थः, इति शिखिशेखरास्तान् शिखिशेखरान्=मयूररूपशिरोभूषणान्। ("मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक्। शिखावलः शिखी केकी मेघनादानुलास्यपि" इत्यमरः। "शिखास्वापीडशेखराः" इति चामरः।) क्षणं=क्षणमात्रं, दधति=धारयति। अत्र कुसुमगुम्फेनोत्प्रेक्षालिङ्गेन दानादिरूपकसिद्धिस्तदुत्थापिता चोत्प्रेक्षेति सङ्करालङ्कारः। पुष्पिताग्रावृत्तम्।

समासः—शिखराणि एव शिखा इति शिखरशिखाः। कल्पद्रुमस्य कुसुमानि कल्पद्रुमकुसुमानि, विकसन्ति च तानि विचित्राणीति विकसद्विचित्राणि, विकसद्विचित्राणि च तानि कल्पद्रुमकुसुमानि इति विकसद्विचित्रकल्पद्रुमकुसुमानि, तैः विकसद्विचित्रकल्पद्रुमकुसुमैः। अभितः गुम्फितान् अभिगुम्फितान्। अलघूनि च विलम्बीनि च तानि पिच्छानि इति अलघुविलम्बिपिच्छानि, तान्येव दामानि येषु ते अलघुविलम्बिपिच्छदामानः, तान् अलघुविलम्बिपिच्छदाम्नः। शिखिन एव शेखराः शिखिशेखरास्तान् शिखिशेखरान्।

भावार्थः—श्रीकृष्णसारथिर्दारुक उवाच यत्—किञ्च रैवतकपर्वतस्यास्यैताः शिखारूपिण्यश्चूडाः विकसितनानावर्णकल्पवृक्षपुष्पैर्ग्रथितानिव विशाललम्बमानमयूरपिच्छस्रजो मयूररूपिशिरोभूषणान् धारयतीव।

( ८८ ) प्रश्नः—

आच्छाद्य पुष्पपटमेष महान्तमन्तरावर्तिभिर्गृहकपोतशिरोधराभैः।
स्वाङ्गानि धूम्ररुचिमागुरवीं दधानैर्धूपायतीव पटलैर्नवनीरदानाम्॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं देववाण्या व्याख्यायताम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य चतुर्थसर्गादुद्धृतमस्ति। अत्र भगवता श्रीकृष्णेन दृष्टे रैवतकपर्वते विस्मयान्विते च भगवति श्रीकृष्णसारथिर्दारुको भगवन्तम्प्रति रैवतकं वर्णयति।

अन्वयः—एषः महान्तं पुष्पपटम् आच्छाद्य अन्तरावर्तिभिः गृहकपोत-शिरोधराभैः आगुरवीं धूमरुचिं दधानैः नवनीरदानां पटलैः स्वाङ्गानि धूपायति इव।

व्याख्या—एषः=अयं रैवतकपर्वतः। महान्तं=विस्तृतं, पुष्पाणि=कुसुमान्येव, पटः पुष्पपटः, तं पुष्पपटम्=कुसुमवस्त्रम्। आच्छाद्य=परिधाय, अन्तः=पटाभ्यन्तरे आवर्तिभिरभीक्ष्णं भ्रमद्भिः। गृहे पालितः कपोतो गृहकपोतः, तस्य शिरोधराया आभा गृहकपोतशिरोधराभा, तत् गृहकपोतशिरोधराभा= गृहपारावतकण्ठस्यैवाभा येषां ते, तैः गृहकपोतशिरोधराभैः। ("पारावते कपोतः स्यात्" इति विश्वः।) अगुरोरियमागुरवी, ताम् आगुरवीम्= कालागुरुसम्बन्धिनीम्, धूमस्य रुचिः धूमरुचिस्तां धूमरुचिम्=धूमकान्तिम्, तत्सदृशीं कान्तिमित्यर्थः। ("कालागुर्वगुरु" इत्यमरः।) अत एव निदर्शनालङ्कारः। दधानैः=धारयद्भिः, नीरं ददातीति नीरदाः, नवाश्च ते नीरदाः नवनीरदास्तेषां नवनीरदानाम्=नूतनमेघानाम्, पटलैः=समूहैः, स्वस्य अङ्गानि स्वाङ्गानि, तानि स्वाङ्गानि=आत्मीयात्रयवान्, धूपायतीव=धूपैरधिवासयतीव। अत्र धूपायतीवेत्युत्प्रेक्षा, रूपकोपमानिदर्शनाभिरङ्गैः सङ्करालङ्कारः, वसन्ततिलकावृत्तम्।

समासः—पुष्पाण्येव पटः पुष्पपटस्तं पुष्पपटम्। गृहे पालितः कपोतो गृहकपोतः, तस्य शिरोधराया आभा गृहकपोतशिरोधराभा, गृहकपोतशिरोधराभा इव आभा येषां ते, तैर्गृहकपोतशिरोधराभैः। अगुरोरियं आगुरवी, ताम् आगुरवीम्। धूमस्य रुचिर्धूमरुचिस्तां धूमरुचिम्। नीरं ददातीति नीरदाः, नवाश्च ते नीरदाः नवनीरदास्तेषां नवनीरदानाम्। स्वस्य अङ्गानि स्वाङ्गानि, तानि स्वाङ्गानि।

भावार्थः—श्रीकृष्णसारथिर्दारुको भगवन्तमुवाच—अतीवोच्चोऽयं रैवतकपर्वतो विशालपुष्परूपिवस्त्रं परिधाय पुष्परूपवस्त्राभ्यन्तरे अभीक्ष्णं भ्रमद्भिः गृहपालितकपोतकण्ठवच्छीलैः कालागुरुसम्बन्धिनीं धूमकान्तिं धारयद्भिः नूतनमेघसमूहैरात्मीयावयवान् धूपैरधिवासयतीव।

( १०० ) प्रश्नः—

समीरशिशिरः शिरःसु वसतां सतां जवनिका निकामसुखिनाम् ।
बिर्भति जनयन्नयं मुदमपामपायधवला बलाहकततीः ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं संस्कृतगिरा व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य चतुर्थसर्गादुद्धृतमस्ति । अत्र भगवता श्रीकृष्णेन दृष्टे रैवतकपर्वते विस्मयान्विते च भगवति श्रीकृष्णसारथिर्दारुको रैवतकं वर्णयति ।

अन्वयः—समीरशिशिरः शिरःसु वसतां निकामसुखिनां सतां मुदं जनयन् अयम् अपाम् अपायधवलाः बलाहकततीः जवनिकाः विभर्ति ।

व्याख्या—समीरेण=मारुतेन, वायुनेत्यर्थः, शिशिरः=शीतल इति समीरशिशिरः । शिरःसु=शिखरेषु, वसताम्=निवसताम्, स्थितानामित्यर्थः । निकामं सुखिनः निकामसुखिनस्तेषां निकामसुखिनाम्=अत्यन्तसुखिनाम् । सताम्=सज्जनानां, मुदं=प्रमोदं, हर्षमित्यर्थः । ( "मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसम्मदाः" इत्यमरः । ) जनयन्=उत्पादयन्, अयं=पुरो दृश्यमानो रैवतकपर्वतः, अपां=सलिलानाम्, अपायेन धवलाः अपायधवलाः=जलवृष्टया श्वेतवर्णा इत्यर्थः । बलाहकस्य=वारिवाहस्य, ( "अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः" इत्यमरः । ) ततयः=श्रेण्यः समूहा इत्यर्थः । बलाहकततयस्ताः बलाहकततीः=वारिवाहसमूहा, मेघसमूहरूपिण इत्यर्थः । जवनिकाः=तिरस्करिणीः, ( "प्रतिसीरा जवनिका स्यात् तिरस्करिणी च सा" इत्यमरः । ) विभर्ति=धारयति । अनावृत्तेष्वपि शिखरेषु क्रीडने मेघैरेवावरणतां सम्पाद्य मुदं जनयतीत्यर्थः । अत्र बलाहकततीष्वारोप्यमाणानां जवनिकानां मुदं जनयन्निति प्रकृतोपयोगिवर्णनात् परिणामालङ्कारः । "आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः" इति लक्षणात् । जलोद्धतगतिर्वृत्तम्—"रसैर्जसजसा जलोद्धतगतिः" इति लक्षणात् ।

समासः—समीरेण शिशिरः समीरशिशिरः । निकामं सुखिनो निकामसुखिनस्तेषां निकामसुखिनाम् । अपायेन धवलाः अपायधवलाः । बलाहकानां ततयो बलाहकततयः, ताः बलाहकततीः ।

भावार्थः—पवनेन शीतलः, स्वशिखरेषु वासं कुर्वतामत्यन्तसुखिनां सज्जनानामानन्दमुत्पादयन्नयं रैवतकपर्वतः जलवृष्टया श्वेतवर्णमेघसमूहरूपिणी जवनिकाः धारयति ।

(१०१) प्रश्नः—

मरकतमयमेदिनीषु भानोस्तरुविटपान्तरपातिनो मयूखाः।
अवनतशितिकण्ठकण्ठलक्ष्मीमिह दधति स्फुरिताणुरेणुजालाः॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देश-सहितं देववाण्यां व्याख्येयम्।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य चतुर्थसर्गादुद्धृतमस्ति। अत्र भगवता श्रीकृष्णेन दृष्टे रैवतकपर्वते विस्मयान्विते च भगवति श्रीकृष्णसारथिदारुको भगवन्तम्प्रति रैवतकं वर्णयति।

अन्वयः—इह मरकतमयमेदिनीषु तरुविटपान्तरपातिनः स्फुरिताणुरेणु-जालाः भानोः मयूखाः अवनतशितिकण्ठकण्ठलक्ष्मीं दधति।

व्याख्या—इह=अत्र रैवतकपर्वते, मरकतानाम्=अश्मगर्भाणां, ("गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः' इत्यमरः।) विकाराः मरकतमय्यः, ताश्च ता मेदिन्यः मरकतमयमेदिन्यः, तासु मरकतमयमेदिनीषु=अश्मगर्भमयभूमिषु। तरूणां=वृक्षाणां, विटपाः=पल्लवाः, ("विटपः पल्लवे षिङ्गे विस्तारे स्तम्भशाखयोः" इति विश्वः।) तरुविटपाः, तेषामन्तराणि तरुविटपान्तराणि, तैः पतन्तीति ते तरुविटपान्तरपातिनः=वृक्षपल्लवमध्यपातिनः। अणवश्च ते रेणवः अणुरेणवः, तेषां जालानि अणुरेणुजालानि, स्फुरितानि अणुरेणुजालानि येषु ते स्फुरिताणुरेणुजालाः=दीप्तसूक्ष्मरजःकणाः। भानोः=दिवाकरस्य, मयूखाः=रश्मयः, किरणा इत्यर्थः। ("किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः" इत्यमरः।) शितिः कण्ठो यस्य सः शितिकण्ठः, तस्य कण्ठः शितिकण्ठकण्ठः= मयूरकन्धरा, अवनतश्चासौ शितिकण्ठकण्ठः अवनतशितिकण्ठकण्ठः, तस्य लक्ष्मीः अवनतशितिकण्ठकण्ठलक्ष्मीः, तां अवनतशितिकण्ठकण्ठलक्ष्मीम्=नीचैर्नतमयूर-ग्रीवासुषमाम्। दधति=धारयन्ति। अत्र निदर्शनालङ्कारः। पुष्पिताग्रावृत्तम्।

समासः—मरकतानां विकाराः मरकतमय्यः, ताश्च ताः मेदिन्यः मरकत-मयमेदिन्यः, तासु मरकतमयमेदिनीषु। तरूणां विटपाः तरुविटपाः, तेषामन्त-राणि तरुविटपान्तराणि, तैः पतन्तीति ते तरुविटपान्तरपातिनः। अणवश्च ते रेणवः अणुरेणवः, अणुरेणूनां जालानि अणुरेणुजालानि, स्फुरितानि येषु ते स्फुरिताणुरेणुजालाः। शितिः कण्ठो यस्य सः शितिकण्ठः, तस्य कण्ठः शिति-कण्ठकण्ठः, तस्य लक्ष्मीरिति शितिकण्ठकण्ठलक्ष्मीस्तां शितिकण्ठकण्ठलक्ष्मीम्।

भावार्थः—रैवतकपर्वतेऽस्मिन् मरकतमणिमयभूमिषु वृक्षपल्लवमध्यात् पतनशीलाः, यत्र सूक्ष्मरजःकणाः दीप्यन्ते, तादृशाः सूर्यकिरणाः नीचैर्नतमयूरगलसुषमां धारयन्ति ।

( १०२ ) प्रश्नः—

प्रालेयशीतमचलेश्वरमीश्वरोऽपि सान्द्रेभचर्मवसनावरणोऽधिशेते ।
सर्वर्तुनिर्वृतिकरे निवसन्नुपैति न द्वन्द्वदुःखमिह किञ्चिदकिञ्चनोऽपि ॥

पद्यमिदं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारसहितं संस्कृतेन व्याख्यायताम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य चतुर्थसर्गादुद्धृतमस्ति । अत्र भगवता श्रीकृष्णेन दृष्टे रैवतकवर्णने विस्मयान्विते च भगवति श्रीकृष्णसारथिर्दारुको भगवन्तम्प्रति रैवतकं वर्णयति ।

अन्वयः—ईश्वरः अपि सान्द्रेभचर्मवसनावरणः सन् प्रालेयशीतम् अचलेश्वरम् अधिशेते । सर्वर्तुनिर्वृतिकरे इह निवसन् अकिञ्चनः अपि किञ्चिद् अपि द्वन्द्वदुःखं न उपैति ।

व्याख्या—ईश्वरः अपि = सकलैश्वर्यशाली शिवोऽपि । सान्द्रं च तद् इभचर्म सान्द्रेभचर्म, तदेव वसनं–तदेवावरणं, यस्य सः सान्द्रेभचर्मवसनावरणः = स्थूलकरिचर्मपरिधानः सन् । न त्वनावरणो नापि शिथिलावरण इत्यर्थः । प्रलयादागतं प्रालेयम्, प्रालेयेन = तुषारेण, । "अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् । प्रालेयं मिहिका च" इत्यमरः । शीतम् = शीतलं, प्रालेयशीतम् = तुषारशीतलम् । अचलानामीश्वरोऽचलेश्वरस्तम् अचलेश्वरम् = हिमवन्तम् (कैलासपर्वतं), अधिशेते = तस्मिन् स्वपितीत्यर्थः । निर्वृत्तिं करोति इति निर्वृतिकरः, सर्वे च ते ऋतवः सर्वर्तवः, सर्वर्तुभिर्निर्वृतिकरः सर्वर्तुनिर्वृतिकरः, तस्मिन् सर्वर्तुनिर्वृतिकरे = सदासुखकरे, इह = अस्मिन् रैवतकपर्वते, निवसन् = वासं कुर्वन्, नास्ति किञ्चनास्येत्यकिञ्चनोऽपि = निःस्वोऽपि, दरिद्रोऽपीत्यर्थः । किञ्चिदपि अल्पमपि, द्वन्द्वदुःखं = शीतोष्णदुःखम्, न उपैति = नावाप्नोति, नित्यं सन्निहितानामृतूनामन्योऽन्यदोषनिवारकत्वादिति भावः । ( "द्वन्द्वं युग्महिमोष्णादि मिथुनं कलहो रहः" इति वैजयन्ती । अत्रोपमानाद्धिमाचलादुपमेयस्याधिक्यवर्णनाद्व्यतिरेकालङ्कारः । वसन्ततिलकावृत्तम् ।

समासः—प्रलयादागतं प्रालेयम्, तेन शीतं प्रालेयशीतम् । अचलानामीश्वरः अचलेश्वरस्तम् अचलेश्वरम् । सान्द्रं च तद् इभचर्म सान्द्रेभचर्म, तदेव

वसनं सान्द्रेभचर्मवसनम्, तदेवावरणं यस्य सः सान्द्रेभचर्मवसनावरणः। निर्वृत्ति करोतीति निर्वृतिकरः, सर्वे च ते ऋतवः सर्वर्तवः, सर्वर्तुभिर्निर्वृतिकरः सर्वर्तुनिर्वृतिकरस्तस्मिन् सर्वर्तुनिर्वृतिकरे। नास्ति किञ्चनास्येति अकिञ्चनः।

भावार्थः—श्रीकृष्णसारथिर्दारुक उवाच यत्—सकलैश्वर्यशाली शूलपाणिर्भगवान् शङ्करोऽपि स्थूलगजचर्मरूपवसनं परिदधानो हिमवन्तं (कैलासम्) अधिशेते अर्थात् सर्वशक्तिमान् ऐश्वर्यशाली शिवोऽपि हिमशैत्यभयात् तन्निवारणाय स्थूलगजचर्म परिदधाति। किन्तु सर्वर्तुसुखकरे रैवतकपर्वतेऽस्मिन् वासं कुर्वन् दरिद्रोऽपि किञ्चिदपि शीतोष्णरूपदुःखं नावाप्नोति।

(१०३) प्रश्नः—

दधद्भिरभितस्तटौ विकचवारिजाम्बू नदै-
विनोदितदिनक्लमाः कृतरुचः जाम्बूनदैः।
निषेव्य मधु माधवाः सरसमत्र कादम्बरं
हरन्ति रतये रहः प्रियतमाङ्कादम्बरम्॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशसहितं सुरगिरा विवृणुत।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य चतुर्थसर्गादुद्धृतमस्ति। अत्र भगवता श्रीकृष्णेन दृष्टे रैवतकपर्वते विस्मयान्विते च भगवति श्रीकृष्णसारथिर्दारुको भगवन्तम्प्रति रैवतकं वर्णयति।

अन्वयः—अत्र माधवाः विकचवारिजाम्बू तटौ अभितः दधद्भिः नदैः विनोदितदिनक्लमाः च जाम्बूनदैः कृतरुचः (सन्तः) सरसं कादम्बरं मधु, निषेव्य रतये रहः प्रियतमाङ्काद् अम्बरं हरन्ति।

व्याख्या—अत्र=अस्मिन् रैवतकपर्वते, माधवाः=यादवाः। विकचानि वारिजानि येषु तानि विकचवारिजानि, विकचवारिजान्यम्बूनि ययोस्तौ विकचवारिजाम्बू=विकसितकमलजलौ, तटौ=पुलिनौ, अभितः=उभयतः, दधद्भिः=धारयद्भिः। नदैः=अम्बुप्रवाहैः। प्राक्स्रोतसो नद्यः=प्रत्यक्स्रोतसो नदाः, नर्मदां विनेत्याहुः। दिनस्य=दिवसस्य, क्लमः=परिश्रम इति दिनक्लमः, विनोदितः=अपनीतो, दिनक्लमो येषां ते विनोदितदिनक्लमाः=विहारापनीताह्निकसन्तापा इत्यर्थः। च=किञ्च। जम्बूनदस्य विकाराः जाम्बूनदाः, तैर्जाम्बूनदैः=कनक-

भूषणैः, कृतरुचो=जनितशोभाः सन्तः, सरसं=रसवत्, स्वादवत् । ( "रसो गन्धरसे जले । शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रव्यरागयोः । देहधातुप्रभेदे च पारदास्वादयोः पुमान्" इति मेदिनी । "रसो गन्धे रसे स्वादे" इति च विश्वः ।) कादम्वं=इक्षु, राति–लातीति प्रकृतित्वेनादत्ते इति कादम्बरमैक्षवम्, ( "पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम्" इति स्मरणात् । मधु=मद्यं, निषेव्य=पीत्वा । अत्र मधुकादम्बरशब्दयोः सामान्यविशेषपरत्वान्न पौनरुक्त्य-दोषः । रतये=सम्भोगार्थम्, रहः=एकान्तस्थाने । प्रियतमानां=प्रेयसीनाम-ङ्कादेवाङ्ककाद्, गात्राम्बरं=वस्त्रं, हरन्ति=आक्षिपन्ति । यादवाश्चेह (रैवतक-पर्वते ) मधुपानरतोत्सवैर्विस्रब्धं विहरन्तीति भावः । अत्र यमकालङ्कारः, पृथ्वीवृत्तम्="जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः" इति लक्षणात् ।

समासः—विकचानि वारिजानि येषु तानि विकचवारिजानि, विकच-वारिजान्यम्बूनि ययोस्तौ विकचवारिजाम्बू । दिनस्य क्लमः इति दिनक्लमः, विनोदितो दिनक्लमो येषां ते विनोदितदिनक्लमाः । जाम्बूनदस्य विकाराः जाम्बूनदास्तैर्जाम्बूनदैः । कादम्वं राति—लातीति—प्रकृतित्वेनादत्त इति कादम्बरम् ।

भावार्थः—श्रीकृष्णसारथिर्दारुको भगवन्तं श्रीकृष्णमुवाच यत्—अस्मिन् रैवतकपर्वते विकसितकमलजलौ तटावुभयतो धारयद्भिरम्बुप्रवाहैरपनीतदिवस-परिश्रमाः स्वर्णभूषणभूषिताः यादवाः सुस्वादमैक्षवं मद्यं पीत्वा एकान्तस्थाने सम्भोगार्थं स्वप्रियावस्त्रापसारणं कुर्वन्ति ।

( १०४ ) प्रश्नः—

अनुकृतशिखरौघश्रीभिरभ्यागतेऽसौ
त्वयि सरभसमभ्युत्तिष्ठतीवाद्रिरुच्चैः ।
द्रुतमरुदुपपन्नैरुन्नमद्भिः सहेलं
हलधरपरिधानश्यामलैरम्बुवाहैः ॥

इति पद्यं सप्रसङ्गं छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारप्रदर्शनपूर्वकं देवभाषया व्याख्येयम् ।

उत्तरम्—सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यमिदं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य चतुर्थसर्गादुद्धृतमस्ति । अत्र श्रीकृष्णसारथिर्दारुक-मुखेन रैवतकवर्णनप्रसङ्गे कविः कल्पयति यद् रैवतकपर्वतोऽयं भगवतः श्रीकृष्णस्य स्वागतार्थमभ्युत्तिष्ठतीव ।

अन्वयः—असौ उच्चैः अद्रिः त्वयि अभ्यागते ( सति ) अनुकृतशिखरौघश्रीभिः द्रुतमरुदुपपन्नैः, ( अत एव ) सहेलम् उन्नमद्भिः हलधरपरिधानश्यामलैः अम्बुवाहैः सरभसम् अभ्युत्तिष्ठति इव ।

व्याख्या—असौ=पुरतो दृश्यमानः, उच्चैः=उन्नतः, अद्रिः=रैवतकपर्वतः, त्वयि=भगवति श्रीकृष्णे, अभ्यागते सति=सम्मुखमागते सति, शिखराणाम् ओघाः शिखरौघाः, अनुकृता शिखरौघाणां श्रीर्यैस्तैः अवकृतशिखरौघश्रीभिः=शिखरौघभ्रमकारिभिरित्यर्थः । अत एवात्र श्रीरिति निदर्शनया भ्रान्तिमदलङ्कारो व्यज्यते । द्रुतश्चासौ मरुत् द्रुतमरुत्=तीव्रसमीरः, ( "समीरमारुतमरुज्जगत्प्राणसमीरणाः" इत्यमरः । ) तेनोपपन्नाः द्रुतमरुदुपपन्नास्तैः द्रुतमरुदुपपन्नैः=तीव्रसमीरप्रेरितैः । अत एवेति शेषः । सहेलं=सलीलम् । उन्नमद्भिः=उत्पतद्भिः । हलं धरतीति हलधरः अथवा धरतीति धरः, हलस्य धरो हलधरः=बलभद्रः, तस्य परिधानानि=अम्बराणि, हलधरपरिधानानि, तानीव श्यामलाः=श्यामवर्णा, इति हलधरपरिधानश्यामलैः=बलभद्रधौतवस्त्रवच्छ्यामवर्णैः । अम्बुवाहैः=मेघैः । सरभसम्=सौत्सुक्यम्, अभ्युत्तिष्ठतीव=अभ्युत्थानं करोतीवेत्यर्थः । अत्र करोतीवेति क्रियानिमित्ता क्रियास्वरूपोत्प्रेक्षा । विशिष्टमेघोन्नमनक्रियया प्रत्युत्थानक्रियोत्प्रेक्षणात् सा चोक्तनिदर्शनानुप्राणितेति सङ्करः । शाब्दस्तु वृत्त्यनुप्रासः । मालिनीवृत्तम्—"ननमयययुतेयं मालिनी भोगिलोकैः" इति लक्षणात् ।

समासः—शिखराणाम् ओघाः शिखरौघाः, अनुकृता शिखरौघाणां श्रीर्यैस्तैः अनुकृतशिखरौघश्रीभिः । द्रुतश्चासौ मरुत् द्रुतमरुत्, तेनोपपन्नाः द्रुतमरुदुपपन्नास्तैः द्रुतमरुदुपपन्नैः । हलं धरतीति हलधरः अथवा धरतीति धरः, हलस्य धरो हलधरः, हलधरस्य परिधानानि हलधरपरिधानानि, तानीव श्यामला इति हलधरपरिधानश्यामलास्तैर्हलधरपरिधानश्यामलैः । अम्बूनि वहन्तीति अम्बुवाहास्तैः अम्बुवाहैः ।

भावार्थः—भगवन्तं श्रीकृष्णम्प्रति तत्सारथिर्दारुको वक्ति यद् भवदागमनकाले शिखरसमूहवत् प्रतीयमानैः, तीव्रवायुप्रेरितैः, श्रीबलरामधौतवस्त्रवत् श्यामवर्णमेघैरुन्नमद्भिरिदं ज्ञायते यदयमुच्चो रैवतकपर्वत एव भवत्स्वागतार्थमभ्युत्थानं करोतीव ।

॥ इति चतुर्थः सर्गः ॥

---

## प्रश्नपत्रागत-प्रश्नोत्तरभागः

### सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी

### शास्त्रिपरीक्षायाम्

### प्रथमवर्षे

### साहित्यविषये-कवर्गे-चतुर्थपत्रम्

### प्रश्नपत्रम् १९७८

१. निम्ननिर्दिष्टेषु पद्येषु छन्दःकोशसन्दर्भभावार्थसमासविग्रहालङ्कारोल्लेखपूर्वकं यथेच्छं त्रीणि पद्यान्येव देववाण्या व्याख्येयानि—

( क ) रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः ।
स्फुटीभवद्ग्रामविशेषमूर्च्छनामवेक्षमाणं महतीं मुहुर्मुहुः ॥

( ख ) उदासितारं निगृहीतमानसैर्गृहीतमध्यात्मदृशा कथश्चन ।
बहिर्विकारं प्रकृतेः पृथग्विदुः पुरातनं त्वां पुरुषं पुराविदः ॥

( ग ) अनिर्लोडितकार्यस्य वाग्जालं वाग्मिनो वृथा ।
निमित्तादपराद्धेषोर्धानुष्कस्येव वल्गितम् ॥

( घ ) रम्या इति प्राप्तवतीः पताका रागं विविक्ता इति वर्धयन्तीः ।
यस्यामसेवन्त नमद्वलीकाः समं वधूभिर्वलभीर्युवानः ॥

( ङ ) यत्रोज्झिताभिर्मुहुरम्बुवाहैः समुन्नमद्भिर्न समुन्नमद्भिः ।
वनं ववाधे विषपात्रकोत्था विपन्नगानामविपन्नगानाम् ॥

२. "माघेनेव च माघेन कम्पः कस्य न जायते" उक्तेरस्याः सार्थक्यं सप्रमाणं सम्यक् सम्पाद्यताम् ।

अथवा

अम्बरादवतरतो भगवतो नारदस्य वर्णनं ग्रन्थोक्तदिशा स्वसंस्कृतेन कुरुताम् ।

३. अधोलिखितेषु पद्यांशेषु केषामपि चतुर्णामाशयं सयुक्तिकं समुपपादयत ।

( क ) ऋते रवेः क्षालयितुं क्षमेत कः क्षपातमस्काण्डमलीमसं नभः ।

( ख ) विपादनीया हि सतामसाधवः ।

( ग ) महीयांसः प्रकृत्या मितभाषिणः ।

( घ ) बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः ।

( ङ ) जगत्पवित्रैरपि तं न पादैः स्प्रष्टुं जगत् पूज्यमयुज्यतार्कः ।

उत्तराणि—

१. ( क ) द्रष्टव्यम्, पृ. ३८ । ( घ ) द्रष्टव्यम् पृ. १०३ ।
( ख ) ,, पृ. ५४ । ( ङ ) ,, पृ. ११५ ।
( ग ) ,, पृ. ७२ ।

२. "माघेनेव च माघेन कम्पः कस्य न जायते" । द्रष्टव्यम्, पृ० ११ ।

अथवा

अम्बरादवतरतो भगवतो नारदस्य वर्णनम् । द्रष्टव्यम्, पृ० १९ ।

३. ( क ) ऋते रवेः क्षालयितुं क्षमेत कः क्षपातमस्काण्डमलीमसं नभः ।

सन्दर्भः प्रसङ्गनिर्देशश्च— पद्यांशोऽयं महाकविश्रीमाघप्रणीतस्य "शिशुपाल-वध"महाकाव्यस्य प्रथमाङ्कादुद्धृतः । अत्र देवर्षिर्नारदमुखेन भगवतः विश्व-पालनसामर्थ्यं दुष्टदमनपूर्वकं सज्जनपरित्राणसामर्थ्यञ्च वर्णयन् कविः भगवतः सूर्येणोपमानं प्रदर्शयति ।

भावार्थः—देवर्षिर्नारदो भगवन्तम्प्रति शिशुपालवधार्थं निवेदयन्नाह—हे जगत्पालक ! दुष्टेभ्यः सज्जनानां परित्राणपूर्वकं जगदिदं पालयितुं भवान् तथैव समर्थः, यथा रजन्यन्धकारेण निष्प्रभं गगनं प्रकाशयितुं भास्करमतिरिच्य न कोऽप्यन्यः समर्थो जायते ।

( ख ) शुभेतराचारविपक्विमापदो विपादनीया हि सतामसाधवः ।

सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यांशोऽयं महाकविश्रीमाघप्रणीतस्य "शिशुपाल-वध"महाकाव्यस्य प्रथमसर्गादुद्धृतोऽस्ति । अत्र नारदो भगवते श्रीकृष्णाय शिशुपालस्य वधार्थं निवेद्य तदौचित्यं प्रतिपादयति ।

भावार्थः—देवर्षिर्नारदो भगवन्तं श्रीकृष्णमुवाच—भवता शिशुपालोऽवश्य-मेव हन्तव्यः । यतो हि अशुभाचरणेन परिपक्वविपत्तयो दुष्टाः सज्जनानां कृतेऽवश्यमेव वध्या भवन्ति ।

( ग ) महीयांसः प्रकृत्या मितभाषिणः ।

सन्दर्भः प्रसङ्गनिर्देशश्च-पद्यांशोऽयं महाकविश्रीमाघप्रणीतस्य "शिशुपाल-वध"महाकाव्यस्य द्वितीयसर्गादुद्धृतोऽस्ति । अत्र कविरर्थान्तरन्यासेन युधिष्ठिर-यज्ञे गमनमावश्यकं चैद्यशिशुपालवधार्थमभियानं वेति विषये विचारणार्थं भगवतः श्रीकृष्णस्य मौनं दर्शयति ।

**भावार्थः**—युधिष्ठिरयज्ञे गमनं चैद्यशिशुपालवधार्थमभियानञ्चोभयत्र कः पूर्वं विधातव्य इति विषये स्वाभिधेयसम्मिताक्षरां वाचमुक्त्वा तूष्णीम्भूतो भगवान् श्रीकृष्णः यतो हि महात्मानो जनाः स्वभावेन मितभाषिणो भवन्ति, निरर्थकं कदाचिदपि न जल्पन्तीति भावः।

( घ ) वद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः।

**सन्दर्भः प्रसङ्गनिर्देशश्च**—पद्यांशोऽयं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य द्वितीयसर्गादुद्धृतोऽस्ति। अत्र कविर्बलराममुखेन श्रीकृष्णम्प्रति चैद्यस्य शिशुपालस्य श्रीकृष्णेन सह कृत्रिमशत्रुत्वं प्रतिपादयन् विषयेऽस्मिन् वैरस्य मूलं स्त्रिय एवेति वर्णयति।

**भावार्थः**—वलरामो भगवन्तं श्रीकृष्णम्प्रति कथयति यत् रुक्मिणीमपहृत्य विवाहकरणकारणेन शिशुपालो भवतः कृत्रिमशत्रुः सम्पन्नः, यतो हि सर्वत्र वैररूपिणो महीरुहस्य मूलं स्त्रिय एव भवन्ति।

( ङ ) जगत्पवित्रैरपि तं न पादैः स्प्रष्टुं जगत्पूज्यमयुज्यतार्कः।

**सन्दर्भः प्रसङ्गनिर्देशश्च**—पद्यांशोऽयं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य तृतीयसर्गादुद्धृतोऽस्ति। अत्र कविर्युधिष्ठिरस्य यज्ञे भागं ग्रहीतुं प्रस्थानसमुद्यतस्य भगवतः श्रीकृष्णस्य प्रस्थानसन्नाहं प्रतिपादयन्नादौ छत्रधारणं वर्णयति।

**भावार्थः**—भगवतः श्रीकृष्णस्य छत्रधारणं वर्णयन् कविः कल्पयति यत् भास्करो विश्ववन्द्यम्भगवन्तं श्रीकृष्णं संसारपावनसमर्थैर्विश्वस्मिन् पवित्रैर्वाऽपि किरणैः स्प्रष्टुं नार्हत, यतो हि सः विस्तृतं पूर्णिमाचन्द्रवन्मनोहरं छत्रं धृतवानासीत्।

## प्रश्नपत्रम् १९७९

१. अधोलिखितेषु पद्येषु छन्दःसन्दर्भभावार्थसमासविग्रहालङ्कारनिर्देशपूर्वकं सुरगिरा यथेच्छं त्रीण्येव पद्यानि विवृणुत—

( क ) तमर्घ्यमर्घ्यादिकयादिपूरुषः सपर्यया साधु सः पर्यपूपुजत्।
　　ग्रहानुपैतुं प्रणयादभीप्सवो भवन्ति नापुण्यकृतां मनीषिणः॥

( ख ) उदीर्णरागप्रतिरोधकं जनैरभीक्ष्णमक्षुण्णतयातिदुर्गमम्।
　　उपेयुषो मोक्षपथं मनस्विनस्त्वमग्रभूमिर्निरुपायसंश्रया॥

( ग ) सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम्।
　　सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम्॥

(घ) मध्येसमुद्रं ककुभः पिशङ्गीर्या कुर्वती काञ्चनवप्रभासा।
तुरङ्गकान्तामुखहव्यवाहज्वालेव भित्त्वा जलमुल्ललास॥
(ङ) विद्वद्भिरागमपरैर्विवृतं कथञ्चिच्छ्रुत्वापि दुर्ग्रहमनिश्चितधीभिरन्यैः।
श्रेयान् द्विजातिरिव हन्तुमघानि दक्षं गूढार्थमेष निधिमन्त्रगणं बिभर्ति॥

२. "नवसर्गगते माघे नवशब्दो न विद्यते।"

अथवा

"माघे सन्ति त्रयो गुणाः" भणितेरस्याः सार्थक्यं सयुक्तिकं समुपपादयत।

३. निम्नलिखितेषु सूक्तिवाक्येषु केषामपि त्रयाणामाशयो लेख्यः—

(क) महानुभावा हि नितान्तमर्थिनः।
(ख) सदाभिमानैकधना हि मानिनः।
(ग) इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम्।
(घ) सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः।

उत्तराणि—

१. (क) द्रष्टव्यम्, पृ० ४२। (घ) द्रष्टव्यम् पृ० १०१।
(ख) ,, पृ० ५३। (ङ) ,, पृ० १२५।
(ग) ,, पृ० ७३।

२. नवसर्गगते माघे नवशब्दो न विद्यते। द्रष्टव्यम् पृ० ८।

अथवा

माघे सन्ति त्रयो गुणाः। द्रष्टव्यम्, पृ० ९।

३. (क) महानुभावा हि नितान्तमर्थिनः।

सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यांशोऽयं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य प्रथमसर्गादुद्धृतोऽस्ति। अत्र कविर्नारदपूजनानन्तरं भगवतः श्रीकृष्णस्य प्रसन्नतां वर्णयति।

भावार्थः—कविर्वर्णयति यद् भगवान् श्रीकृष्णो देवर्षेर्नारदस्य पूजां विधायाऽतीव हर्षितो जातः, यतो हि महात्मानः पूज्यान् पूजया वारं वारं वशीकर्तुं अत्यन्तमभिलाषुका भवन्ति।

(ख) सदाभिमानैकधना हि मानिनः।

सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यांशोऽयं महाकविश्रीमाघप्रणीतस्य "शिशुपाल-

वध"महाकाव्यस्य प्रथमसर्गादुद्धृतोऽस्ति। अत्र नारदो भगवन्तं श्रीकृष्णं देवेन्द्रसन्देशश्रावणप्रसङ्गे भगवन्तं श्रीकृष्णं विष्णोरवतारं शिशुपालं च हिरण्यकशिपोरवतारं रावणं तदवतारं च मन्यमानः भगवतः श्रीकृष्णस्य रामावतारसमये रावणः आसन्नविनाशः सन् श्रीरामाय भगवतेऽपि द्रुग्ध्वा जानकीं न मुमोच स रामेण हृत इति वर्णयति।

भावार्थः—अत्र नारदो भगवन्तं श्रीकृष्णं कथयति—मानिनः प्राणत्यागं रोचन्ते न तु मानत्यागम्। अतएव कारणाद् रावणो भवन्तं स्वघातकमवगत्यापि जानकीं न मुमोचेत्यर्थः।

( ग ) इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम्।

सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यांशोऽयं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य द्वितीयसर्गादुद्धृतोऽस्ति। अत्र युधिष्ठिरयज्ञे गन्तव्यं चैद्याभियानं वा कर्तव्यमिति विषये श्रीकृष्णवचो निशम्य बलरामो भगवतः श्रीकृष्णस्य वचसोऽनुल्लङ्घनीयत्वं समर्थयति।

भावार्थः—बलरामो ब्रूते—यत् स्वल्पमपि श्रीकृष्णवचः कथमप्युल्लङ्घनीयं न भवितुमर्हति, यतो हि काष्ठराशिदाहकोऽप्यग्निस्तेजसा दिवाकरं नातिक्रामति।

( घ ) सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः।

सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यांशोऽयं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य द्वितीयसर्गादुद्धृतोऽस्ति। अत्र बलरामः कथयति यत् शिशुपालाभियाने शास्त्रचिन्ता न विधेयेति।

भावार्थः—बलरामः कथयति यद्—अनियन्त्रितं ( असीमं ) बलमन्यद्भवति, शास्त्रनियन्त्रितं बलं चान्यत्। न कदाचिदुभयोः साम्यं भवितुमर्हति। यतो हि प्रकाशान्धकारयोरेकत्र स्थितिः कदापि भवितुं युज्यते? न कदापीति भावः।

## प्रश्नपत्रम् १९८०

१. अधोनिर्दिष्टेषु पद्येषु कानिचित् त्रीण्येव पद्यानि देववाण्या व्याख्यायन्ताम्।

( क ) अजस्रमास्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया।
पुरःप्रवालैरिव पूरितार्धया विभान्तमच्छस्फटिकाक्षमालया॥

( ख ) उपप्लुतं पातुमदो मदोद्धतैस्त्वमेव विश्वम्भर विश्वमीशिषे।
ऋते रवेः क्षालयितुं क्षमेत कः क्षपातमस्काण्डमलीमसं नभः॥

( ग ) षड्गुणाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः ।
ग्रन्थानधीत्य व्याकर्तुमिति दुर्मेधसोऽप्यलम् ।।

( घ ) न लङ्घयामास महाजनानां शिरांसि नैवोद्धतिमाजगाम ।
अचेष्टताष्टापदभूमिरेणुः पदाहतो यत्सदृशं गरिम्णः ।।

( ङ ) उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ।।

२. शिशुपालवधस्य द्वितीयचतुर्थसर्गयोर्मध्ये कस्याप्येकस्य सर्गस्य कथा सङ्क्षेपेण स्वसंस्कृतेन लेख्या ।

३. कं मूलग्रन्थमाधारीकृत्य महाकविना माघेन शिशुपालवधस्य निर्माणं कृतमिति सप्रमाणं प्रतिपाद्यताम् ।

अथवा

महाकवेर्माघस्य जीवनवृत्तं काव्यनिर्माणवैशिष्टयञ्च सयुक्तिकं सम्पाद्यताम् ।

उत्तराणि—

१. ( क ) द्रष्टव्यम्, पृ. ३७ । ( घ ) द्रष्टव्यम् पृ. १०० ।
( ख ) ,, पृ. ५५ । ( ङ ) ,, पृ. ११७ ।
( ग ) ,, पृ. ७१ ।

२. द्वितीयसर्गकथासारः, द्र०, पृ० २४ ।
चतुर्थसर्गकथासारः, द्र०, पृ० २१ ।

३. द्रष्टव्यम्, पृ० १२ ।

अथवा

महाकवेर्माघस्य जीवनवृत्तं काव्यनिर्माणवैशिष्टयञ्च, द्रष्टव्यम्, पृ० १ ।

## प्रश्नपत्रम् १९८३

१. अधस्तनेषु पद्येषु सप्रसङ्गं छन्दोऽलङ्कारनिर्देशसहितं पद्यत्रयं व्याख्येयम्—

( क ) जगत्यपर्याप्तसहस्रभानुना
न यन्नियन्तुं समभावि भानुना ।
प्रसह्य तेजोभिरसंख्यतां गतै-
रदस्त्वया नुन्नमनुत्तमं तमः ।।

( ख ) षड्गुणाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः ।
ग्रन्थानधीत्य व्याकर्तुमिति दुर्मेधसोऽप्यलम् ।।

( ग ) तस्यातसीसूनसमानभासो भ्राम्यन् मयूखावलिमण्डनेन ।
चक्रेण रेजे यमुना जलौघः स्फुरन्महावर्त्त इवैकबाहुः ।।

( घ ) उच्चारणज्ञोऽथ गिरां दधान-
मुच्चारणत्पक्षिगणास्तटीस्तम् ।
उत्कन्धरं द्रष्टुमवेक्ष्य शौरि-
मुत्कन्धरं दारुक इत्युवाच ।।

२. निम्नाङ्कितेषु पद्यांशेषु त्रयाणां भावार्थो निरूपणीयः ।

( क ) शुभेतराचारविपक्त्रिमापदो विपादनीया हि सतामसाधवः ।
( ख ) शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ।
( ग ) आकाशसाम्यं दधुरम्बराणि न नामतः केवलमर्थतोऽपि ।
( घ ) व्याकोशकोकनदतां दधते नलिन्यः ।

३. स्वाधीतग्रन्थदिशा सुरगिरा रैवतकं वर्णयत ।

अथवा

माघस्य "घण्टाकवि" इत्युपनाम्नि युक्तिं प्रदर्शयत ।

उत्तराणि

१. ( क ) द्रष्टव्यम्, पृ० ५२ । ( ग ) द्रष्टव्यम् पृ० ९६ ।
( ख ) ,, पृ० ७१ । ( घ ) ,, पृ० ११६ ।
२. ( क ) द्रष्टव्यम्, पृ० ६३ ।

( ख ) शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ।

सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यांशोऽयं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध"महाकाव्यस्य द्वितीयसर्गादुद्धृतोऽस्ति । अत्र युधिष्ठिरयज्ञगमनचैद्याभियानयोः किम्पूर्वं विधेयमिति विषये विचारणायां प्रचलितायां श्रीकृष्णबलरामयोर्वक्तव्यानन्तरमुद्धवो ब्रवीति । तत्र दैवमेव शान्तस्वभावस्य सर्वं विधास्यति चेत्तर्हि किं पौरुषेण प्रयोजनम् इति शङ्कां समाधत्ते उद्धवः ।

**भावार्थः**—उद्धवो ब्रूते—यत् केवलं भाग्यमेव न समाश्रयितव्यम्, न वा केवलं पुरुषार्थमेव समाश्रयितव्यम्, यथा श्रेष्ठकविः काव्यनिर्माणादौ काव्यशरीरभूतं शब्दार्थद्वयमेव समाश्रयति तथैव यथासमयं विद्वानपि दैवं पुरुषार्थञ्चोभयमपि समाश्रयति ।

( ग ) आकाशसाम्यं दधुरम्बराणि न नामतः केवलमर्थतोऽपि ।

**सन्दर्भः प्रसङ्गनिर्देशश्च**—पद्यांशोऽयं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य तृतीयसर्गादुद्धृतोऽस्ति । अत्र कविर्द्वारकापुरीवर्णनं करोति ।

**भावार्थः**—कविः कथयति यद् द्वारकापुर्यां आच्छादितेष्वपि स्पष्टतया दृष्टिगोचरेषु नारीस्तनमण्डलेषु सूक्ष्माणि स्वच्छानि च वस्त्राणि न केवलं "अम्बर"-नाम्ना, अपितु आच्छादितत्वेऽपि नारीस्तनमण्डलानां स्पष्टतया दृष्टिगोचरत्वात् अर्थेणाप्याकाशस्य साम्यं विहितवन्तः ।

( घ ) व्याकोशकोकनदतां दधते नलिन्यः ।

**सन्दर्भः प्रसङ्गनिर्देशश्च**—पद्यांशोऽयं महाकविश्रीमाघप्रणीतस्य "शिशुपालवध" महाकाव्यस्य चतुर्थाङ्कादुद्धृतोऽस्ति । अत्र भगवता श्रीकृष्णेन दृष्टे रैवतकपर्वते, विस्मयान्विते च भगवति श्रीकृष्णसारथिर्दारुको भगवन्तं प्रति रैवतकं वर्णयति ।

**भावार्थः**—श्रीकृष्णसारथिर्दारुको भगवन्तं श्रीकृष्णमुवाच यद् रैवतकपर्वतेऽस्मिन् सुधांशुकिरणेष्वनेकविधरत्नकिरणैर्मिश्रितत्वात् सहस्रसंख्यात्वं प्राप्तेषु सत्सु "निश्चितरूपेणायं दिवाकर" इति मत्वा पद्मिन्यो रात्रावपि विकसितरक्तपद्मत्वमाप्नुवन्ति ।

३. रैवतकवर्णनम्, द्रष्टव्यम्, पृ० २१ ।

अथवा—माघस्य "घण्टाकविः" इत्युपनाम्नि युक्तिः, द्र० पृ० ८ ।

## प्रश्नपत्रम् १९८४

१. अधोमुद्रितेषु पद्येषु छन्दोऽलङ्कारप्रसङ्गनिर्देशपुरःसरं किमपि पद्यत्रयं व्याख्येयम्—

( क ) उदासितारं निगृहीतमानसैर्गृहीतमध्यात्मदृशा कथञ्चन ।
बहिर्विकारं प्रकृते पृथग् विदुः पुरातनं त्वां पुरुषं पुराविदः ॥

( ख ) नैतल्लघ्वपि भूयस्या वचो वाचाऽतिशय्यते ।
इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम् ॥

( ग ) यां यां प्रियः प्रैक्षत कातराक्षीं सा सा ह्रिया नम्रमुखी बभूव ।
निःशङ्कमन्याः सममाहितेर्ष्यास्तत्रान्तरे जघ्नुरमुं कटाक्षैः ॥

(घ) इतस्ततोऽस्मिन् विलसन्ति मेरोः समानवप्रे मणिसानुरागाः।
स्त्रियश्च पत्यौ सुरसुन्दरीभिः समा नवे प्रेमणि सानुरागाः॥

२. निम्नस्थेषु पद्यांशेषु त्रयाणामेव भावार्थः स्फोटनीयः—

(क) गृहानुपैतुं प्रणयादभीप्सवो भवन्ति नापुण्यकृतां मनीषिणः।

(ख) अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठते।

(ग) मधूनि वक्त्राणि च कामिनीनामामोदकर्मव्यतिहारमीयुः।

(घ) नात्र कान्तमुपगीतया तया स्वानमा नमति काऽलिमालया।

३. स्वपठितग्रन्थमाधारीकृत्य श्रीकृष्णस्येन्द्रप्रस्थं प्रति प्रस्थानं वर्णयत।

अथवा—"माघे सन्ति त्रयो गुणाः" इत्युक्तिं पर्यालोचयत।

उत्तराणि—

१. (क) द्र०, पृ० ५४। (ग) द्र०, पृ० ९५।
(ख) द्र०, पृ० ७०। (घ) द्र०, पृ० १२०।

२. (क) गृहानुपैतुं प्रणयादभीप्सवो भवन्ति नापुण्यकृतां मनीषिणः।

सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यांशोऽयं महाकविश्रीमाघप्रणीतस्य शिशुपालवधमहाकाव्यस्य प्रथमसर्गादुद्धृतः। अत्र कविः श्रीकृष्णेन भगवता विहितायाः देवर्षेर्नारदस्य सविधिपूजनस्यौचित्यं वर्णयति।

भावार्थः—कविरस्मिन् पद्यांशे वर्णयति यद् भगवान् श्रीकृष्णोऽम्बरादागतस्य देवर्षेर्नारदस्य यत् सविधिपूजनं विहितवान्, तत् तस्य कृते समीचीनमेवासीत्, यतो हि विचारशीला महात्मानोऽपुण्यकृतां गृहान् स्नेहात् प्राप्तुमभिलाषुका न भवन्ति अर्थात् पुण्यशीलजनानां गृह एव प्रेम्णा गच्छन्ति।

(ख) अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठते।

सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यांशोऽयं महाकविमाघप्रणीतस्य शिशुपालवधमहाकाव्यस्य द्वितीयसर्गादुद्धृतः। अत्र कविः बलराममुखेन शिशुपालवधप्रेरणाद्वारा सपत्नोच्छेदं विना प्रतिष्ठाऽपि दुर्लभेति सोदाहरणं विवेचयति।

भावार्थः—अस्मिन् पद्यांशे श्रीबलराममुखेन कविः कथयति यत् प्रतिष्ठा खलु शत्रुनाशमन्तरेण न लब्धुं शक्यते यतो हि रजः कर्दमतामप्राप्य जलं न तिष्ठति।

(ग) मधूनि वक्त्राणि च कामिनीनामामोदकर्मव्यतिहारमीयुः।

सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यांशोऽयं महाकविमाघप्रणीतस्य शिशुपालवधमहाकाव्यस्य तृतीयसर्गादुद्धृतः। अत्र कविः द्वारकापुरीं वर्णयति।

भावार्थः—अस्मिन् पद्यांशे द्वारिकापुरीं वर्णयन् कविराह—द्वारकापुर्यां स्वाभाविकीं सुगन्धितां वहमानानि मद्यानि युवतीनां मुखानि च पुरुषाणां प्रीत्यै विभावनक्रियाविनिमयं वासनाधानपरस्परकरणं वा प्रापुः।

( घ ) नात्र कान्तमुपगीतया तया स्वानमा नमति काऽलिमालया।

सन्दर्भः प्रसङ्गनिर्देशश्च—पद्यांशोऽयं महाकविमाघप्रणीतस्य शिशुपालवधमहाकाव्यस्य चतुर्थसर्गादुद्धृतः। अत्र कविः रैवतकपर्वतवर्णनप्रसङ्गे भ्रमरश्रेणीगुञ्जनस्य कामोद्दीपकत्वं विवेचयति।

भावार्थः—अस्मिन् पद्यांशे कविः रैवतकपर्वतवर्णनप्रसङ्गे कथयति यत् अस्मिन् रैवतकपर्वते अत्यन्तश्यामा चञ्चला भ्रमरश्रेणिगुञ्जनध्वनिरव्यक्तमधुरवीणातन्त्रीवद् ध्वनति। भ्रमरश्रेणिगुञ्जनस्य कामोद्दीपकत्वात् सर्वाः स्त्रियः मानं विहाय पतिं निकषा नम्रीभवन्ति।

३. प्रश्नः—स्वपठितग्रन्थमाधारीकृत्य श्रीकृष्णस्येन्द्रप्रस्थं प्रति प्रस्थानं वर्णयत।

उत्तरम्—द्र० तृतीयसर्गस्य कथासारः। पृ० २५।

अथवा—"माघे सन्ति त्रयो गुणाः" द्र० पृ० ९।

## प्रश्नपत्रम् १९८६

१. अधोनिर्दिष्टेषु पद्येषु सप्रसङ्गच्छन्दोऽलङ्कारनिर्देशपुरःसरं किमपि पद्यत्रयं व्याख्येयम्—

( क ) तमर्घ्यमर्घ्यादिकयादिपूरुषः, सपर्यया साधु स पर्यपूपुजत्।
गृहानुपैतुं प्रणयादभीप्सवो, भवन्ति नापुण्यकृतां मनीषिणः॥

( ख ) यावदर्थपदां वाचमेव मादाय माधवः।
विरराम महीयांसः, प्रकृत्या मितभाषिणः॥

( ग ) प्राणच्छिदां दैत्यपतेर्नखानामुपेयुषां भूषणतां क्षतेन।
प्रकाशकार्कश्यगुणौ दधानाः, स्तनौ तरुण्यः परिवव्रुरेनम्॥

( घ ) या न ययौ प्रियमन्यवधूभ्यः, सारतरागमना यतमानम्।
तेन सहेह बिभर्ति रहः स्त्री, सा रतरागमनायतमानम्॥

२. अधस्तनेषु पद्यांशेषु त्रयाणामेव भावार्थान् विशदीकुरुत—

( क ) मुमोच जानन्नपि जानकीं न यः, सदाभिमानैकधना हि मानिनः।

( ख ) पूर्वरङ्गः प्रसङ्गाय, नाटकीयस्य वस्तुनः।

( ग ) अनेकशः संस्तुतमप्यनल्पा, नवं नवं प्रीतिरहो करोति ।
( घ ) व्याकोशकोकनदतां दधते नलिन्यः ।
३. शिशुपालवधस्य तृतीयसर्गमाधारीकृत्य समुद्रवर्णनं कुरुत ।
अथवा—माघकवेर्भाषासौष्ठवं निरूपयत ।

---

## प्रश्नपत्रम् १९८७

१. अधोनिर्दिष्टेषु पद्येषु सप्रसङ्गं छन्दोऽलङ्कारनिर्देशपुरस्सरं किमपि पद्यत्रयं व्याख्येयम्—

( क ) उपप्लुतं पातुमदो मदोद्धतैस्त्वमेव विश्वम्भर ! विश्वमीशिषे ।
ऋते रवेः क्षालयितुं क्षमेत कः क्षपातमस्काण्डमलीमसं नभः ॥

( ख ) बलावलेपादधुनापि पूर्ववत् प्रबाध्यते तेन जगज्जिगीषुणा ॥
सतीव योषित् प्रकृतिः सुनिश्चला पुमांसमभ्येति भवान्तरेष्वपि ॥

( ग ) तृप्तियोगः परेणापि जायते न महात्मनाम् ।
पूर्णश्चन्द्रोदयाकाङ्क्षी दृष्टान्तोऽत्र महार्णवः ॥

( घ ) क्षुण्णं पदन्तः करणेन वृक्षाः फलन्ति कल्पोपपदास्तदेव ।
अध्यूषुषो यामभवज्जनस्य याः सम्पदस्ता मनसोऽप्यगम्याः ॥

( ङ ) उदयति विततोर्ध्वरश्मिरज्जा-
वहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टा-
द्वयपरिवारितवारणेन्द्रलीलाम् ॥

२. अधस्तनेषु पद्यांशेषु त्रयाणामेव भावार्थान् विशदीकुरुत—

( क ) गृहानुपैतुं प्रणयादभीप्सवो भवन्ति नापुण्यकृतां मनीषिणः ।
( ख ) शुभेतराचारविपक्त्रिमापदो निपातनीया हि सतामसाधवः ।
( ग ) शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ।
( घ ) अचेष्टताष्टापदभूमिरेणु पदाहतो यत्सदृशं गरिम्णः ।
( ङ ) वाल्मीकेररहितरामलक्ष्मणानां
साधर्म्यं दधति गिरां महासरस्य ।

३. शिशुपालवधस्य द्वितीयसर्गमधिकृत्य बलरामवर्णितं राजनीतिप्रकारं विशदं विवेचयत ।

अथवा

'माघे सन्ति त्रयो गुणाः' इति सूक्तिं सुललितगिरा साधूपपादयत ।

---